महाकविश्रीकालिदासविरचितं

# विक्रमोर्वशीयम्

रङ्गनाथकृतप्रकाशिकया समेतम् ।

---

पणशीकरोपाह्वलक्ष्मणतनुजनुषा वासुदेवशर्मणा
संस्कृतम् ।



चतुर्थं संस्करणम् ।

तच्च

मुम्बय्यां

तुकाराम जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये रामचन्द्र येसु
शेडगेद्वारा मुद्रयित्वा प्राकाश्यं नीतम् ।

शाके १८३६ वत्सरे

---

मूल्यं रूप्यकपादत्रयम् ।

# सन १८८८ मध्यें छापलेल्या पहिल्या आवृत्तीची प्रस्तावना.

महाकवी श्रीकालिदासविरचित अभिज्ञानशाकुन्तल नाटक राघवभट्टकृत टीकेसहित कांहीं वर्षांमागें आह्मीं छापून प्रसिद्ध केलें, त्या वेळेस त्या व इतर कवींचीं नाटकें सटीक छापून काढावीं हा आमचा मानस होता. पण तशीं साधनें अनुकूल नसल्याकारणानें आजपर्यंत आह्मांस तत्संबंधानें कांहींच करतां आलें नाहीं. सुमारें दोन वर्षांमागें आमचे जयपुरकर मित्र महामहोपाध्याय पण्डित दुर्गाप्रसाद यांनीं विक्रमोर्वशीवरील रङ्गनाथकृत टीकेची एक हस्तलिखित प्रत आह्मांस पाठवून दिली. ही प्रत संवत् १७४५ माघ कृष्ण अमावास्या रोजीं लिहिलेली आहे, तेव्हां आज ह्या पोथीला बरोबर २०० वर्षें लिहून झालीं. या पोथीच्या लेखकानें–त्यास संस्कृत न समजल्यामुळें ह्मणा, किंवा निष्काळजीपणामुळें ह्मणा–कित्येक ठिकाणीं भलभलत्याच हस्तदोषांच्या चुका केल्या आहेत, तरी ज्या पोथीवरून ही प्रत उतरून घेतलेली आहे ती सर्वथा शुद्ध असल्याकारणानें हींत अशुद्धें फारच थोडीं राहिलीं आहेत, व तीं बहुधा शुद्ध वाचतां येतात. क्वचित् पंक्ति सुटल्या आहेत त्यास प्रत्यन्तराशिवाय उपाय नाहीं. दुसरी एखादी पोथी मिळेल या आशेनें आज २ वर्षें वाट पाहिली, व ठिकठिकाणीं चौकशीही केली, परंतु प्रत्यन्तर मिळालें नाहीं. दुसरी प्रत मिळत नाहीं ह्मणून मिळालेली प्रतही गुप्त ठेवावी ही गोष्ट आह्मांस प्रशस्त वाटेना; ह्मणून याच एका पोथीवरून ही टीका छापली आहे. पुढें प्रत्यन्तर मिळाल्यास ती सुधारून घेतां येईल.

या नाटकाचा कर्ता कालिदास. हा कवि कोणत्या काळीं झाला याविषयीं पुष्कळ मतभेद आहेत. खिस्तीशकापूर्वीचें शतक, खिस्तीशकानन्तरचें दुसरें शतक, सहावें शतक वगैरे अनेक काळ या कवीविषयीं विचार करतांना विद्वानांनीं सुचविले आहेत, परंतु निश्चयात्मक असा एकही काळ या कवीचा अजून ठरला नाहीं.

टीकाकार रङ्गनाथ याविषयींची जी काय माहिती मिळते ती त्याच्या या टीकेवरून. या टीकेच्या आरम्भीं मङ्गलाचरणांत व अन्तीं उपसंहारांत टीकाकारानें स्वतःविषयीं जे उल्लेख केले आहेत, त्यांवरून या टीकाकाराचा जन्म मौनिनामक कुळांत झाला. याचे कुळाचें आराध्य दैवत रामचन्द्र, उपनाम श्रिम्बेकर ( शेंबेकर ), पणज्याचें नांव तानभट्ट, आज्याचें रङ्गनाथ, चुलत्याचें नारायण[1], पित्याचें बालकृष्ण, वडील बन्धूचें वेणीमाधव, आणि

१. या नारायणाच्या उत्तररामचरित व विद्धशालभञ्जिका नाटकांवर टीका आहेत.

पुत्राचें बालकृष्ण होतें असें कळतें. चुलता नारायण व बाप बालकृष्ण हे मोठे विद्वान् होते असें टीकाकार ह्मणतो. रङ्गनाथानें ही टीका काशीमध्यें संवत् १७१२ ह्मणजे शा. श. १५७७ श्रावण वद्य ५ रविवार अश्विनीनक्षत्र वृद्धियोग या दिवशीं समाप्त केली. ती पुढें ५ वर्षांनीं ह्मणजे संवत् १७१७ मध्यें त्याचा पुत्र बालकृष्ण यानें लिहून प्रसिद्ध केली.

## रङ्गनाथाचा वंशवृक्ष.

तानभट्ट
।
रङ्गनाथदीक्षित
। ।
नारायण बालकृष्ण
।
। ।
वेणीमाधव रङ्गनाथ
।
बालकृष्ण

रङ्गनाथाच्या टीकेंत आढळणारीं

**ग्रन्थकारांचीं नांवें**—आचार्य ( शंकर ? ) उदयनाचार्य, कल्पतरुकार, काव्यप्रकाशकार, क्षीरस्वामी, चाणक्य, जोतिरीश्वर, धनिक, नाट्यलोचनकार, पाराशर, पिङ्गल, भरत, मातृगुप्ताचार्य, याज्ञवल्क्य, वाग्भट, विश्वनाथकविराज, श्रीधरसेन, संगीतकल्पतरुकार, सागर, हरदत्त.

**ग्रन्थांचीं नांवें**—अथर्वशिखा, अथर्वशिरोपनिषद्, अनेकार्थकोष, अमरकोष, एकाक्षरकोष, कठवल्ली, कैवल्योपनिषद्, कौर्मपुराण, छान्दोग्योपनिषद्, तैत्तिरीय, त्रिकाण्डीकोष, त्रिकाण्डीशेषकोष, दशरूपक, देवपाणिविरचितदशरूपकटीका, देवीपुराण, धरणिकोष, नाट्यदर्पण, पातञ्जल ( योगशास्त्र ), ब्रह्माण्डपुराण, भविष्योत्तरपुराण, भारत, भावप्रकाश ( नाट्यशास्त्र ) मुक्तावलीकोष, रूपचिन्तामणिकोष, वराहसंहिता, वामनपुराण, विश्वकोष, विश्वलोचनकोष, विषतन्त्र ( वाग्भटे ) विष्णुपुराण, वैजयन्तीकोष, शैवपुराण, संगीतरत्नाकर, साहित्यदर्पण, स्कान्द ( स्कन्दपुराण ), हलायुधकोष, हेमचन्द्रकोष.

## या आवृत्तीची सूचना.

पहिली आवृत्ति संपल्यामुळें ही दुसरी आवृत्ति छापिली आहे. टीकेचें प्रत्यन्तर अद्यापपर्यन्त आह्मांस मिळालें नाहीं ह्मणून ही आवृत्ति आहे तशी छापणें आह्मांस भाग पडलें, यास आमचा इलाज नाहीं.

॥ श्रीः ॥

# विक्रमोर्वशीयम् ।

## प्रथमोऽङ्कः ।

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥ १ ॥ नः

गण्डसिन्दूरमार्तण्डखण्डिताघतमश्चयः ।
शुण्डोत्क्षिप्तारिवृक्षोऽसौ रक्षताद्गणनायकः ॥
दलत्पद्मपत्रप्रकाशाक्षि लक्ष्मि त्वदङ्घ्रिद्वयाम्भोजभृङ्गायितं मे ।
मनः स्तान्निरस्ताघमस्तातिदुष्टे समस्तात्मरूपे नमस्तेऽस्त्वजस्रम् ॥
अञ्जनानन्दनानन्ददायिनं रघुनन्दनम् ।
वन्दारुजनमन्दारं दशास्यदमनं भजे ॥
नीलोत्पलानुकारी नारीकुललम्पटः कोऽपि ।
गोकुलपरिसरचारी गिरिवरधारी हरिः पायात् ॥
मौलौ मन्दारमाला जयति भगवती जाह्नवी पुण्डरीक-
स्रग्वैधी मुण्डराजी हिमकरकलया चाग्निना भालशोभा ।
यस्याङ्गे नागभूषा प्रविलसति चिताभस्मना चाङ्गरागो
देवोऽयं वामदेवो भवतु भवुककृन्नाट्यसृष्टिप्रवीणः ॥
श्रीबालकृष्णपितरं विद्वद्वृन्दशिरोमणिम् ।
नत्वा नारायणाख्यं च पितृव्यं विबुधोत्तमम् ॥
श्रीकालिदासरचितत्रोटकस्य यथामति ।
रङ्गनाथेन विदुषा व्याख्या विख्यापयिष्यते ॥
यदत्र मोहतः किंचिद्विच्युतं तद्बुधोत्तमैः ।
परोपकाररसिकैः संशोध्यं शुद्धमानसैः ॥

प्रारिप्सितग्रन्थस्य निष्प्रत्यूहसमाप्तिकामनया मङ्गलं मनस्यनुसंदधत्, अन्यार्थानीयमानपानीयभृतकुम्भस्येव सूत्रधार च्छायाआ(?) नान्द्या मङ्गलत्वमभिसंदधद्वा, नान्दीमवतारयति—**वेदान्तेष्विति** । स स्थाणुः शिवो वः सामा-

जिकानां निःश्रेयसाय मोक्षायास्तु । चतुर्थ्या निमित्तत्वमर्थः। तथा च मोक्ष-निमित्तमस्त्वित्यर्थः। मोक्षं ददात्विति यावत्। 'तुमर्थाच्च' इति तुमर्थे वा चतुर्थी। निःश्रेयसं दातुमस्त्वित्यर्थः। 'स्थाणुः कीले हरौ' इति त्रिकाण्डी। हरे प्रवृत्तस्य स्थाणुपदस्य प्रवृत्तिनिमित्तप्रदर्शनं च—'ततः प्रभृति विश्वानः(त्मा) प्रसूते च (न प्रसूते) शुभाः प्रजाः । स्थाणुवन्निश्चलो यस्मात्स्थितः स्थाणुरतः स्मृतः ॥' इति पुराणेषु। शिवस्य मोक्षहेतुत्वं च—'स एव मोक्षस्थितिनाशहेतुः' इति श्वेताश्वतरे। 'नमो भवस्य हेत्यै' इति च तैत्तिरीये । 'तदेतत्सकलं विश्वं स हि विश्वाधिकः शिवः। स एव जगतां नाथः स तु संसारमोचकः ॥' इति पाराशरः। अन्यत्र च बहुषु स्थलेषु सुप्रतीतमेव । ननु यदि स स्वभाव एव तस्य, तर्हि किमिति स लोकैः सेव्यत इत्याशङ्कयाह—स्थिरेति। स्थिरो विषयादिनानुच्छेद्यः, भक्तियोगो भक्तिप्राप्तिः, तया सुलभः सुप्राप्यः। 'आराध्यत्वेन ज्ञानं भक्तिः' इत्युदयनाचार्याः। शिवस्य भक्तिप्राप्यत्वं प्रतीतम् 'भावग्राह्यमनीडाख्यं भावाभावकरं शिवम्।' इति श्वेताश्वतरे। भक्तियोगेत्यनेन हरे भक्तिरपि पूर्वपूर्वानेकजनुर्रर्जितसातिशयसुकृतसंभारतो भवतीति ध्वनितम् । यद्वा स्थिरा भक्तिः, योगो ध्यानं च, ताभ्यां सुलभः। स्थिरभक्तिपूर्वकध्यानैकगम्य इत्यर्थः। ध्यानगम्यत्वमप्युक्तं कैवल्योपनिषदि—'श्रद्धाभक्तिध्यानयोगादवेहि' इति । श्रद्धाभक्त्योर्भेदश्चाचार्यैरुक्तः—'वेदबोधितफलावश्यंभावनिश्चयः श्रद्धा' इति । योगस्वरूपं चोक्तं कठवल्ल्याम्—'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टति(न्ती) तामाहुः परमां गतिम् । तां योगमिति [ मन्यन्ते स्थिरामिन्द्रियधारणाम् ॥' इति ]। स क इत्यपेक्षायामाह—वेदान्तेष्वित्यादि वाक्यत्रयम्। वेदान्तेषूपनिषत्सु यमेकपुरुषमाहुः। तत्त्वविद इत्यर्थात् । नन्वेकादश रुद्राः सन्ति, तत्किमेकस्य सेवनेन मुक्तिरुत सर्वेषाम्। आद्ये कारणानिर्णयेन कार्यस्यासंभवः, द्वितीये तु सर्वेषामेकदा सेवनासंभव इति दूरापास्तम्, तस्मान्मुक्तिरूपं फलमिति चेत्तत्राह—एकेति । एकत्वं चोक्तमथर्वशिरोपनिषदि—'स एको य एकः स रुद्रो यो रुद्रः स ईशानो य ईशानः स भगवान्महेश्वरः' इति। 'एक एव रुद्रो न द्वितीयाय तस्थे' इत्यादि तैत्तिरीयेऽपि । तथा चैकादशत्वप्रवादस्तु प्रापञ्चिकः। ज्ञानमार्गे तु स एक तव, तस्य च सूपपन्नमेव सेवनेन मुक्तिदातृत्वमिति भावः। पुरुषमिति। निखिलभक्ताखिलकामनापूरणसमर्थमित्यर्थः। पुरुषत्वं चास्य—'पुरुषो वै रुद्रः सन्महो [नमो] नमः। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः। तेनेदं पूर्णं पुरुषेण सर्वम्।' इत्यादि तैत्तिरीये। 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः॥महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥' इति। 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः एतद्वैतत्' इत्यादि च कठवल्ल्याम्। 'स-

र्ववर्णः पुरुषदैवत्यः–' इत्यथर्वशिखायाम् । इत्यादिषु बहुषु वेदान्तेषु दृष्टम् । वेदान्तेष्विति चोपलक्षणं पुराणादिष्वपि द्रष्टव्यम् । यथा श्रीकौर्मे श्वेताश्वतरोपबृंहणे—'निरीक्षितास्ते परमेशभक्त्या तदन्तरे देवमशेषहेतुम् । पश्यन्ति शंभुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणम् ॥' इति । तथा स्कान्दे शंकरसंहितायामुपदेशकाण्डे—'इदं सदैव सौम्याग्रे यदीयं लक्षणा श्रुतिः । मह एवेति तद्ब्रह्म पुरुषः सन्महान्नमः ॥' इति । भारत आनुशासनिके पर्वणि—'ततः स भगवानीशः सर्वतत्त्वादिरव्ययः । सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः ॥' इति । तथा सूतसंहितायां शंकरगीतायाम्—'इन्द्रिय–' इत्यारभ्य 'पुरुषो नाम संपूर्णः शिवः सत्यादिलक्षणः । साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि च ॥' इत्यादिनोक्तम् । वेदान्तेष्वित्यनेनैव तदाह—सकलप्रमाणेषु मूर्धन्यं प्रमाणं श्रुतिः, तल्लाभे किं प्रमाणान्तरगवेषणयेति । उत्कर्षकं विशेषमाह—व्याप्येति । रोदसी द्यावापृथिव्यौ व्याप्य स्थितम् । रोदसीति रोदःशब्दस्य सान्तस्य द्विवचनम् । 'भूद्यावौ रोदस्यौ रोदसी च ते ।' इत्यमरः । सान्ते 'रोदः क्लीबे रोदसी स्त्री दिवि भूमौ पृथक्पृथक् । सहोक्त्याप्येतयोरेतौ रोदस्यौ [रोदसी] तथा ॥' इति रूपचिन्तामणिश्च । शिवस्य व्यापकत्वमुक्तमथर्वशिरोपनिषदि—'स ओंकारो य ओंकारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी ।' इति । 'व्यापको हि भगवान्रुद्रः' इति च तत्रैव । 'व्यापनाद्व्यापी महादेवः' इत्यथर्वशिखायाम् । 'सर्वाननशिरोग्रीवः सर्वतोऽक्षिशिरोरुहः । सर्वव्यापी स भगवांस्तस्मात्सर्वगतः शिवः ॥' इति श्वेताश्वतरे । तैत्तिरीये च—'यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वाभुवना विवेश तस्मै रुद्राय नमो अस्तु ।' इत्यादौ । यस्मिन्निति । यस्मिन्नभ (न्भ) वे ईश्वर इति शब्दोऽनन्यविषय एतन्मात्रवाचकः । यथार्थाक्षरः । यौगिक इत्यर्थः । ईश्वरत्वं चास्य सकलश्रुतिसिद्धम् । तथा हि—'ईशानः सर्वविद्यानामीश्वरः' इत्यादि तैत्तिरीये । श्वेताश्वतरेऽपि—'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं यतीनां परमं पुरस्ताद्विदाम देवं भुवनेशमीड्यम् ॥' इति । 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति पातञ्जले । तथा भारते हरिवंशे कृष्णवचनम्—'यस्मादीशो महतामीश्वराणां भवानाद्यः प्रीतिदः प्राणदश्च । तस्माद्धि त्वामिश्वरं प्राहुरीशं सन्तो विद्वांसः सर्वशास्त्रार्थविज्ञाः ॥' इति । इत्यादि ईश्वरशब्दस्य शिवमात्रवाचकत्वं तैत्तिरीयादौ प्रतीतमेव । तदनुसारिणः श्रीहरदत्तचरणा अप्याहुः—'नानीश्वरं भवितुमर्हति विश्वमेतद्व्हीश्वरं च नितरामयथाप्रमाणम् । तल्लोकवेदविदितेश्वरवर्जनेन कोऽयं भ्रमः कतिचिदीश्वरमन्यमाहुः ॥ मात्रार्थवादविधिभिर्बहुभिर्विभक्तो यः शब्दशक्तिरनपेक्षतया प्रमाणम् । सोऽयं विमत्सरविमृष्टपदार्थतत्त्वो वेदः प्रकाशयति केवलमीश्वरं त्वाम् ॥ शब्दोऽयमीश्वर इति श्रुतिगोचरः सन्नानीलकण्ठमवतंसितचन्द्रले-

खम् । त्वामेव बोधयति नाथ निजार्थपोषादन्यं पुनः प्रकरणादिनिपीडनेन ॥' [इति] यथार्थाक्षरत्वं निरतिशयैश्वर्यशालित्वात् । ईष्ट इतीश्वरः । 'स्थेशभास–' इति वरच् । सर्वव्यापित्वाद्वा अश्नुत इतीश्वरः। 'अश्नोतेः' इत्यनेन औणादिको वरट्, उपधाया ईत्वं च। अन्तरिति। चः पूर्वेण सह समुच्चयार्थः । यो नियमिताः प्राणादयः प्राणापानसमानव्यानोदानाख्या वायवो यैरेतादृशैर्मुमुक्षुभिरन्तर्हृदये मृग्यतेऽन्विष्यते । तथा च छान्दोग्ये दहरोपासनायाम्—'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः तस्मिन्यदन्तस्तदन्वेष्टव्यं यद्वाव जिज्ञासितव्यम्।' इत्यारभ्य 'एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिताः। एष आत्मा अपहतपाप्मा विरजो विमृत्युर्विशोकोऽविचिकित्सोऽपिपासः सत्यकामः सत्यसंकल्पः ।' इति । कैवल्येऽपि—'हृत्पुण्डरीकं विरजं विमानं विचिन्त्य मध्ये विशदं विशोकम् । अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥' इति । 'दहरं विपाप्मं परवेश्मभूतं हृत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥' इति तैत्तिरीये । तथा शैव एकादशरुद्रसंहितायाम्—'दहरं विपाप्मं परमेश्वरस्य यद्वेश्मभूतं सकलं पुरस्थम् । तत्रापि दहं गगनं विशोकं तदेव नित्यं सकलैरुपास्यम् ॥' इति । पुरुषस्यान्तर्मार्गणमुक्तं याज्ञवल्क्येन—'अथैकं परमात्मानं परमानन्दविग्रहम् । गुरूपदेशाद्विज्ञेयं पुरुषं कृष्णपिङ्गलम् ॥ ब्रह्म ब्रह्मपुरे गार्गि ( मार्गे ) दहराब्जे खमध्ये ( ध्यमे ) अभ्यासात्तं प्रपश्यन्ति सन्तस्त्वं तथा कुरु च ॥' इत्यादिना । सर्वव्यापिज्ञानेन मोक्षप्राप्तिरुक्ता श्वेताश्वतरे—'अतः परं ब्रह्म परं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् । विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वामृता भवन्ति ॥' इति। ईश्वरस्यान्तःस्थत्वमुक्तं वामनपुराणे—'ततोऽव्ययात्मा स हरिः स्वहृत्पङ्कजशायिनम्। दर्शयामास देवानां मुरारिर्लिङ्गयमीश्वरम् ॥' इति । अन्तर्मार्गणं निःश्रेयसार्थमेवेति मुमुक्षुभिरित्यनेन ध्वन्यते। तथा चोक्तं ब्रह्माण्डपुराणे शैवे च—'स्वराडाख्यस्य देवस्य हृदयाम्भोजमध्यमे। उमासहायो भगवान्नीलकण्ठस्त्रिलोचनः॥ यश्च नृत्यत्यसौ नित्यं परमानन्दचिद्घनः। तं दृष्ट्वा मनुजः सर्वो विमुक्तो भवतीति हि॥' इत्यादिना। एतेन यः सकलोपनिषत्सु एकत्वपुरुषत्वेश्वरत्वान्तःस्थत्वमोक्षहेतुत्वादिधर्मविशिष्टो गीयते स युष्माकं सुखसंपत्संपादको भूयादित्यखण्डार्थः । 'प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।' इति त्रिकाण्डी । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ।' इति च सैव । इति ग्रन्थविस्तरभयादलमतिपल्लवितेन ॥ 'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः । नान्दीति कथ्यते' इति मातृगुप्ताचार्योक्तम्, 'आशीर्यत्र नमस्क्रिया च शशिनः संकीर्तनं वस्तुनो निर्देशः' इत्यादि नाट्यलोचनकारोदितम्, 'समुच्चितार्थतात्पर्यं तद्वस्तु सुधियां मतम् ।' इति नाटकस्य मुख्यार्थसूचका नान्दीति कल्पतरुकारकथितं च नान्दीलक्षणमनुसंधाय काव्यार्थसूचनमप्यत्रैवावगन्तव्यम् ।

( नान्द्यन्ते )

**सूत्रधारः**—अलमतिविस्तरेण । (नेपथ्याभिमुखमवलोक्य) मारिष, इतस्तावत् ।

---

वेदस्यान्तेष्विति(ष्वन्ति)केषु प्रदेशविशेषेष्विति यावत् । 'अन्तो नाशे मनोहरे । स्वरूपेऽन्तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु ॥' इति विश्वलोचनः । अनन्यसामान्यप्रजापालनदयादाक्षिण्यादियोगाद्यं पुरुषमेकं मुख्यमाहुर्वर्णयन्ति । बुधा इति शेषः । रोदसी द्यावाभूमी व्याप्य स्थितम् । निजकीर्त्येति शेषः । यस्मिन्राजनीश्वरशब्दो यथार्थाक्षरो निग्रहानुग्रहादिप्रभुशक्तिसंपत्तेरिति भावः । चोऽप्यर्थे । तथा च नियमितप्राणादिभिर्मुमुक्षुभिरपि समलोष्टाश्मकाञ्चनैरत्युदासीनैरपीत्यर्थः । यो राजा अन्तः अन्तःकरणे मृग्यते चिन्त्यते । नैतादृशो धर्मशीलो जगति दृष्टपूर्व इति सर्वदा चेतस्यनुसंधीयत(ते तस्य सुधिय) इति भावः । स्थाणुः स्थिरतरः । अतिधीर इति यावत् । यद्वा स्थाणू रुद्ररूपः । तदंशत्वात् । स्थिरा भक्तिर्यासां प्रजानां ताभिर्योगेन चित्तानुसरणरूपेणोपायेन सुलभोऽभिगम्यः । यद्वा 'स्थाणुस्थिर–' इति निर्विसर्गान्तं पाठमङ्गीकृत्य स्थाणुवत्स्थिरः केनाप्यनुच्छेद्यो भक्तियोगेन सुलभश्च । पश्चात्कर्मधारयः । यद्वा भक्तिर्भागो राजग्राह्यस्तद्योगो यस्य स चासौ सुलभश्च । भागरूपेण वा योगेनोपायेन सुलभः । यद्वा स्थिरा भक्तिरर्थाद्राजनि यस्या उर्वश्यास्तया योगेनार्थात्संगमनीयाख्यमणिसंबन्धेन सुलभः सुप्रापः । तस्या वा योगेन पूर्वोक्तोपायेन सुलभः । एतेनास्योर्वशीकामुकत्वम्, लतारूपायाश्चास्याः संगमनीयद्वारा संगम इत्याद्यसूचि। 'योगश्चारे पूर्वलाभे सूत्रे विस्रब्धघातिनि । उपाये संगतौ ध्यानौषधसंनाहयुक्तिषु ॥' इति त्रिकाण्डीशेषः । एवं विशेषणगणविशिष्टः स प्रसिद्धविभवो विशेषणमहिम्ना विशेष्यलाभात्पुरूरवा वो युष्माकं सभासदां निःश्रेयसाय प्रायेण योगक्षेमादिरूपकल्याणायास्तु भवत्विति ॥ १ ॥ **नान्द्यन्त इति** । समनन्तरमेव वक्ष्यमाणलक्षणाया नान्द्या अन्ते सूत्रधारः प्रविशतीत्यर्थः । क्वचित्पुस्तके 'सूत्रधारः' इत्यस्यान्ते द्वितीयोऽङ्को दृश्यते । स च सूत्रधारः प्रविशति वदति चेति क्रियाद्वयसूचनार्थः । सूत्रधारो नाम सूत्रं सबीजकं नाट्यानुष्ठानं धारयति प्रवर्तयतीति सूत्रधारः । तदुक्तम्— 'नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् । रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः॥' इति । सागरोपि—'पूर्वरङ्गो भवेदेषामादौ देवार्चनाविधिः । तद्विधाता स विज्ञेयः सूत्रधारश्च सूत्रभृत् ॥ अनुष्ठानं प्रयोगस्य सूत्रमाहुः सबीजकम् ॥' इति । मातृगुप्ताचार्या अप्याहुः—'चतुरातोद्यनिष्णातोऽनेकभाषासमावृतः । नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥ वेषोपचारचतुरः पौरेषणविचक्षणः । नानागतिप्रचारज्ञो रसभावविशारदः ॥ नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः । छ-

न्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः ॥ तत्तद्गीतानुगलयकलतालावधारणः । अवधाय प्रयोक्ता च योक्तृणामुपदेशकः ॥ एवं गुणगणोपेतः सूत्रधारो निगद्यते' इति । तत्र तावत्पूर्वरङ्गमारभ्यामुखपर्यन्तमयं क्रमः—'तत्र पूर्वं पूर्वरङ्गं सभापूजा ततः परम्। कथनं कविसंज्ञादेर्नाटकस्याप्यथामुखम् ॥' इति। तत्रेति नाटके। यद्यपि—'सभापतिः सभासंस्था गायका वादका अपि । नटी नटश्च मोदन्ते यत्रान्योन्यं तु रञ्जनात् ॥ अतो रङ्ग इति ज्ञेयः पूर्वं यः संप्रकल्पते। तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥' इति भावप्रकाशोक्तलक्षणात्, पूर्वं रज्यते जनोऽस्मिन्निति पूर्वरङ्ग इति व्युत्पत्तेश्च, पूर्वरङ्गो नाट्यशालोच्यते। तथापि तात्स्थ्याद्युपचारहेतोरधिष्ठानलक्षणया पूर्वरङ्गशब्देन व्युत्थापनाद्युच्यते । तदुक्तं साहित्यदर्पणे—'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥' किंच दशरूपके—'पूर्वरङ्गं विधायैव सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥' अन्यत्रापि—'प्रयुज्य रङ्गं निष्क्रामेत्सूत्रधारः सहानुगः। स्थापकः प्रविशेत्पश्चात्सूत्रधारगुणाकृतिः ॥' ज्योतिरीश्वरोऽपि—'आरम्भं भरतः कृत्वा सालंकारः शुभाकृतिः। सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः ॥' इति । संगीतकल्पतरुकारोऽपि—'सूत्रधारः पठेन्नान्दीमन्यो वा रङ्गभूमिगः। मङ्गलं सूचयित्वा तु ललितेन शुभान्विताम् ॥' इति। अत्र च 'सूत्रधाराख्यो भरतो नट एव दिक्पालस्तुतिजर्जरपूजादिनान्यन्तं पूर्वरङ्गं जवनिकान्तर्विदधीत। तस्मिंश्च विनिर्गते रङ्गभूमावागते सूत्रधारसमालंकारगुणोऽन्यः स्थापकाभिधो नटो वैष्णवस्थानकादिना सूत्रधारवत्प्रविश्य काव्यमास्थापयेत्सूचयेत् । अत एव वक्ष्यमाणेन 'नटी विदूषको वा' इति सूत्रधारलक्षणे स्वसमवेषस्थापकाख्यनटेन सूत्रधारेण च संलाप इति संगच्छते।' इति केचिदाहुः। अपरे तु—'दिक्पालस्तुतिजर्जरपूजान्तमेव पूर्वरङ्गं नान्दीव्यतिरिक्तं कृत्वा सूत्रधारे विनिर्गते तत्समगुणत्वात्स्थापक एव सूत्रधारो नान्दीं जवनिकान्तः पठित्वा रङ्गभूमावागत्य काव्यमास्थापयेत्।' इत्याहुः । 'इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयति।' इति साहित्यदर्पणकारः। शक्रध्वजस्य च जर्जर इति पूर्वाचार्यकृता संज्ञा । तथा च—'प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि। तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥' इति । अस्येति पूर्वरङ्गस्य । अतश्चास्या आवश्यकत्वेनोक्तत्वात्प्रत्याहारादिद्वाविंशदङ्गेषु केवलं नाट्ये च सर्वनाटकेषु बहुधा विधीयते। तल्लक्षणं तु देवपाणिविरचितदशरूपकटीकायाम्—'देवद्विजनृपादीनामाशीर्वचनपूर्विका। नन्दन्त्यस्यां सुरा यस्मात्तस्मान्नान्दीति कीर्तिता ॥' तथा नाट्यलोचनकारोऽप्याह—'आशीर्यत्र नमस्क्रिया च शशिनः संकीर्तनं वस्तुनो निर्देशो गुरुसंस्तुतिर्मधुलिहां मोदाय पुष्पाञ्जलिः। श्रव्यैर्द्वादशभिः पदैरथ समैर्यद्वाष्टभिर्निर्मिता सद्वृत्तेन सु-

संधिना च कथिता नान्दीति सर्वागमे ॥' मातृगुप्ताचार्या अप्याहुः—'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः । नान्दीति कथ्यते' इति । साहित्यदर्पणेऽपि—'आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ मङ्गल्यशङ्खचक्राब्जकोककैरवशंसिनी । पदैर्युता द्वादशभिरष्टाभिर्वा पदैर्भवेत् ॥' इति । इयं चाष्टपदा द्वादशपदा समपदा वा विधेया । तदुक्तम्—'सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः । नान्दीं पदैर्द्वादशभिरष्टाभिर्वा पदैर्युताम् ॥ पदैरथ समैः' इति चेत्यादि । पदनियमोऽप्यस्यामुक्तो यथा—'श्लोकपादः पदं [ केचित् ] सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यं च पदमाहुर्विशारदाः ॥ यत्त्वत्र साहित्यदर्पणकृदाह—'कालिदासादिमहाकविप्रबन्धेषु च वेदान्तेष्वित्यादौ नान्दीलक्षणायोगात्पूर्वरङ्गस्यैव रङ्गद्वाराख्यमङ्गलमारभ्य कविः कुर्यादित्युक्तत्वाच्च रङ्गद्वारमेवेदं न नान्दी' इति, तन्मूलादर्शमनिबन्धनम् । यतः 'प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि' इत्यादिपूर्वोदाहृतवचनेनास्या अवश्यकर्तव्यत्वात् 'श्रव्यैर्द्वादशभिः पदैरथ समैर्यद्वाष्टभिर्निर्मिता' इत्यादिसमनन्तरोदाहृतनाट्यलोचनकारोक्तनान्दीलक्षणेऽस्याः समपदत्वेनाप्युक्तेरत्र च श्लोकपादपदाभिधाननयेऽवान्तरवाक्यपदाभिधाने च चतुष्पदात्वेन तत् पदमते(?) स्थिरभक्तीति क्रियाविशेषणान्तपदविधानतः षड्विंशतिपदात्वेन चातिस्पष्टतया नान्द्या विद्यमानत्वान्नान्दीलक्षणायोगाभिधानं गजनिमीलिकया मौखर्यमात्रमित्यास्तां विस्तरेण । अत्र च समासोक्त्या पूर्वोक्तप्रकारेण काव्यार्थप्रकाशनात्पत्रावलीसमाख्येयं नान्दी । तथा चोक्तं नाट्यदर्पणकृता—'यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः । श्लेषेण वा समासोक्त्या नाम्ना पत्रावली तु सा ॥' इति । 'यत्र किंचिन्नतौ पादौ स्यातां मूलप्रसारितौ । वैष्णवं तत्तु निर्दिष्टं स्थानकं विष्णुदैवतम् ॥' इति ज्योतिरीशवचनोक्तवैष्णवस्थानकेन प्रथमप्रविष्टसूत्रधारसमः स्थापकाभिधोऽपरो नटः । 'दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः । सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥' इत्यभिधानात् । 'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः । पदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः ॥' इत्युक्तलक्षणवाग्व्यापारात्मकभारतीरूपाम् 'अलमतिविस्तरेण' इत्यारभ्य 'प्रस्तावना' इत्यन्तां प्रस्तावनामवतारयति—**अलमित्यादिना** । अतिविस्तरेण पूर्वरङ्गाङ्गप्रपञ्चेनालं पूर्यतामित्यर्थः । प्रत्याहारादिनिखिलपूर्वरङ्गाङ्गकरणे हि कथारम्भोत्कण्ठितानां जनानां जाड्यता स्यात्, अतस्तिष्ठत्वयमेतत्प्रपञ्च इति भावः ॥ **नेपथ्याभिमुखमिति** । नेपथ्यं जवनिकान्तर्भूमिर्वेषपरिग्रहस्थलम् । 'अन्तर्जवनिकामाहुर्नेपथ्यम्' इति सागरोक्तेः । केचित्तु—'रङ्गभूमौ तु नेपथ्यं स्यात्प्रसाधने ।' इति विश्वलोचनोक्त्यनुसंधानेन नेपथ्यं रङ्गभूमिमाहुः । अपरे

( प्रविश्य । )

**पारिपार्श्वकः**—भाव, अयमस्मि ।

**सूत्रधारः**—मारिष, परिषदेषा पूर्वेषां कवीनां दृष्टरसप्रबन्धा । अहमस्यां कालिदासग्रथितवस्तुना नवेन त्रोटकेनोपस्थास्ये । तदुच्यतां पात्रवर्गः स्वेषु स्वेषु पाठेष्ववहितैर्भवितव्यमिति ।

**पारिपार्श्वकः**—यथाज्ञापयति भावः । (इति निष्क्रान्तः ।)

**सूत्रधारः**—यावदिदानीमार्यविदग्धमिश्रान्विज्ञापयामि । (प्रणिपत्य ।)

प्रणयिषु वा दाक्षिण्यादथवा सद्वस्तुपुरुषबहुमानात् ।
शृणुत जना अवधानात्क्रियामिमां कालिदासस्य ॥ २ ॥

---

पुनः—'नेपथ्यं स्याज्जवनिका' इति कोषमुपन्यस्य नेपथ्यं जवनिकामेवाहुः । **मारिषेति** । मारिषः स्थापकाख्यसूत्रधारकल्पः पारिपार्श्वाभिधो नटः । लक्षणं चाभाणीद्भरतः—'सूत्रधारस्य पार्श्वे यः प्रवदन्कुरुतेऽर्थनाम् । काव्यार्थसूचनालापं स भवेत्पारिपार्श्वकः ॥' इति । उक्तं चान्यत्र—'मान्यो भावः समुद्दिष्टः किंचिदूनस्तु मारिषः ।' इति ॥ कालिदासेन तदाह्वकविना ग्रथितं वस्तु इतिवृत्तं यत्र । त्रोटकेन तन्नामकेनोपरूपकेण । तल्लक्षणं च साहित्यदर्पणे—'सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् । त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम् ॥' इति । प्रत्यङ्कं सविदूषकत्वादत्र शृङ्गारोऽङ्गी । 'प्रत्यङ्कं सविदूषकम्' इति तु प्रायिकाभिप्रायम् । शृङ्गाराङ्गित्वमात्रमिह विवक्षितम् । तेन कस्मिंश्चिदङ्के सविदूषकत्वव्यभिचारेऽपि न क्षतिः । अन्यत्सर्वं नाटकवत् । 'विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ।' इति तत्रैवोक्तेरिति । पात्रवर्गो नर्तकसमुदायः । अवहितैः सावधानैः ॥ आर्या अभ्यर्हिताः, विदग्धाश्चतुःषष्टिकलावेदिनः, तन्मिश्रान्संवलितान् । सभ्यानित्यर्थः । यद्वा आयाता दूरं गता भ्रान्तत्वादिदोषेभ्य इत्यार्याः । यद्वा आर्याः सत्कुलादिसंपन्नाः । यदाह भरतः—'कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता । अद्रोह इति येष्वेतत्तानार्यान्संप्रचक्षते ॥' कार्यरसवत्सलमनसो विदग्धा मिश्राः पूज्या वा । पूज्ये मिश्रवचनं नित्यबहुवचनान्तम् । 'मरीचिमिश्रैर्दक्षेण' इति विष्णुपुराणात्, लोकेऽपि व्यवहारदर्शनाच्च । **प्रणयिष्विति** । प्रणयः प्रीतिस्तद्वत्सु । दाक्षिण्यमानुकूल्यम् । सद्वस्तु सदितिवृत्तम्, पुरुषो वर्णनीयो नायकः, तयोरादरातिशयात् । समीचीनं वृत्तं यस्यैतादृशः पुरुषो वा । क्रियां कृतिम् ॥ २ ॥

( नेपथ्ये । )

अज्जा, परित्ताअध परित्ताअध । जो सुरपक्खवादी, जस्स वा अम्बरअले गई अत्थि ।

**सूत्रधारः**—(कर्णं दत्वा ।) अये, किं नु खलु मद्विज्ञापनानन्तरमार्तानां कुररीणामिवाकाशे शब्दः श्रूयते ।

मत्तानां कुसुमरसेन षट्पदानां
शब्दोऽयं परभृतनाद एष धीरः ।
आकाशे सुरगणसेविते समन्ता-
त्किं नार्यः कलमधुराक्षरं प्रगीताः ॥ ३ ॥

---

१. आर्याः, परित्रायध्वं परित्रायध्वम् । यः सुरपक्षपाती, यस्य वाम्बरतले गतिरस्ति ।

---

**नेपथ्ये । अज्जा इति ।** आर्याः, परित्रायध्वं परित्रायध्वम् । यः सुरपक्षपाती, यस्य वाम्बरतले गतिरस्ति । अत्र क्वचित्क्वचिद्गाथादिषु लिङ्गवचनपदविपर्यासाः 'प्राकृते लिङ्गवचनमतन्त्रं पूर्वनिपातानियमश्च' इत्युक्तत्वाज्ज्ञेयाः । अत्रेदमवधेयम् । इतिवृत्तं हि वस्त्वित्युच्यते । तच्च—'सूच्यमेव भवेत्किंचिद्दृश्यं श्रव्यमथापरम् ।' इतीतिवृत्तस्य द्वैविध्यमुपन्यस्य 'अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् । विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥' इत्यादि प्रतिपादितम् । प्रकृते तु—'नेपथ्ये' इत्यादिना यत्र यत्र यत्प्रस्तूयते सा चूलिका । 'अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचनम् ।' इति लक्षणात् । यथात्रैव तावत् 'नेपथ्ये' इत्यारभ्य 'अम्बरअले गई अत्थि' इत्यन्तेन कुबेरभवनादागच्छन्त्याश्चित्रलेखाद्वितीयाया उर्वश्या दानवापहरणसूचनमिति ॥ **मत्तानामिति ।** किमिति वितर्के । स च सर्वत्र षट्पदादिशब्दादिष्वन्वेति । कलान्यव्यक्तानि मधुराणि चाक्षराणि यस्यां क्रियायामिति यथा तथा । यद्यपि कलशब्दोऽव्यक्तमधुरवाचकः, तथापि मधुरपदस्य वर्तमानत्वात्केवलाव्यक्तपरो ग्राह्यः । यद्वा कं चित्रं लान्तीति कलानि आश्चर्यकारीणि मधुराणि अक्षराणि यत्र यस्यां क्रियायाम् । यद्वा कं द्युतिं लान्ति तानि । अनुप्रासादिघटनाच्छोभमानानीति यावत् । यद्वा कं शुद्धार्थं लान्ति तानि । प्रसिद्धार्थपदयुक्तानीति यावत् । तेन च 'प्रसिद्धार्थपदत्वं यत्स प्रसादो निगद्यते' इति लक्षणोक्तप्रसादाख्यगुणवत्ताध्व-

(विचिन्त्य ।) भवतु । ज्ञातम् ।

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री
कैलासनाथमनुसृत्य निवर्तमाना ।
बन्दीकृता विबुधशत्रुभिरर्धमार्गे
क्रन्दत्यतः करुणमप्सरसां गणोऽयम् ॥ ४ ॥

(इति निष्क्रान्तः ।)

## प्रस्तावना ।

---

निता । यद्वा कं स्मरं लान्ति तानि । यच्छ्रवणमात्रेण झटिति मदनोद्भवो भवतीति भावः । यद्वा कं स्मरं लान्ति वशीकुर्वन्ति तद्विधानि । यदाकर्णनेन तिर्यञ्चोऽपि हर्षकलिता वशीभवन्ति, किमुतान्ये सचेतस इति हृदयम् । 'को ब्रह्मानिलसूर्याग्निचित्रारियमकेतुषु । विष्णुवाहनशर्वेऽब्धौ सितकर्णे वसौ युतौ ॥ स्वर्गे चक्रे तथा मित्रे शुद्धेऽर्थे स्मरकालयोः ॥' इत्येकाक्षरः । 'को ब्रह्मानिलसूर्याग्नियमात्मद्योतबर्हिषु ।' इति विश्वलोचनः । प्रगीता गातुमुपक्रान्ताः । प्रगीता इत्यादिकर्मणि क्तः । 'किंनर्यः' इत्यपि क्वचित्पाठे किंनरवनिता इत्यर्थः । परं त्वनुपादेयोऽयं पाठः । वितर्कार्थककिंपदस्यात्रातीवावश्यकत्वात् । त्रिगताभिधं चेदं वीथ्यङ्गम् । तल्लक्षणं दशरूपके—'श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं मतम् ।' इति । अत्राकाशे श्रुतः शब्दः श्रुतिसाम्यतः स्वरावयवीभूतसूक्ष्मशब्दसाम्यतः षट्पदादीनां किमित्यादिभिरनेकार्थैर्योजितः । 'प्रथमाश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ॥' इति संगीते ॥ ३ ॥ **ऊरूद्भवेति ।** नरस्य नरावतारस्यार्जुनस्य सखा मुनिर्नारायणस्तस्य ऊरूद्भवा सक्थ्यवयवोत्पन्ना । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । सुरस्त्री उर्वशीसमाख्याप्सरोरूपा । कैलासनाथो महादेवस्तमनुसृत्य सेवित्वा । कैलासनाथमनुसृत्येत्यत्र 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया । 'कैलासनाथमुपनृत्य' इति पाठे तत्समीपे नृत्यं कृत्वेत्यर्थः । 'विवक्षातः कारकविभक्तयो नाना भवन्ति' इति शाब्दिकोक्तिमनुसंधायाधिकरणविवक्षायां कर्मत्वम् । बन्दीकृता हठगृहीता विबुधशत्रवो दैत्याः । मार्गस्यार्धमर्धमार्गो मार्गान्तरालम् । क्रन्दति रोदिति । उर्वशी किल नारायणोरुसंभूतेति पुराणम् ॥४॥ **प्रस्तावनेति ।** तल्लक्षणं भावप्रकाशे—'नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि सा ॥' दशरूपकेऽपि—'सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकम् । स्वकार्यं प्रस्तुताक्षेपिचि-

(ततः प्रविशन्त्यप्सरसः ।)

**अप्सरसः**—अज्जा, परित्ताअध परित्ताअध । जो सुरपक्खवादी, जस्स वा अम्बरअले गई अत्थि ।

(ततः प्रविशत्यपटीक्षेपेण राजा रथेन सूतश्च ।)

**राजा**—अलमाक्रन्दितेन । सूर्योपस्थाननिवृत्तं पुरूरवसं मामेत्य कथ्यतां कुतो भवत्यः परित्रातव्या इति ।

**रम्भा**—असुरावलेपादो ।

१. आर्याः, परित्रायध्वं परित्रायध्वम् । यः सुरपक्षपाती, यस्य वाम्बरतले गतिरस्ति ।

२. असुरावलेपात् ।

---

त्रोक्त्या यत्तदामुखम् ॥' इयं च प्रस्तावना आमुखापराख्या भारत्यङ्गमेवेति । अत्र च—'उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा । प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥' इत्युक्तप्रस्तावनापञ्चाङ्गेषु–'यदि प्रयोग एकस्मिन्प्रयोगोऽन्यः प्रयुज्यते । तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा ॥' इति लक्षणोक्तप्रकारेणेह 'नेपथ्ये । अज्जा, परित्ताअध' इत्यारभ्य 'क्रन्दत्यतः करुणमप्सरसां गणोऽयम्' इत्यन्तेनाप्सरसां प्रवेशं सूचयित्वा निष्क्रान्तेन सूत्रधारेण स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजित इति ॥ [**ततः प्रविशन्तीति** ।] ततः प्रविशन्तीत्यनेन प्रस्तावनान्तसूचितानामप्सरसां प्रवेशः । **अप्सरसः** । आर्याः, परित्रायध्वं परित्रायध्वम् । योऽमर(यः सुर)पक्षपाती, यस्य वाम्बरतले गतिरस्तीति । कुत्रचित् 'ततः प्रविशन्त्यपटीक्षेपेण' इति पाठः । स नाटकग्रन्थादर्शननिबन्धनः । यतः—'नासूचितस्य पात्रस्य प्रवेशो नाटके मतः ।' इति नाटकसमयप्रसिद्धेर्यत्रासूचितपात्रप्रवेशस्तत्राकस्मिकप्रवेशेऽपटीक्षेपेणेति वचनं युक्तम् । अत्र तु प्रस्तावनान्ते सूचितानामेवाप्सरसां प्रवेश इति । केचित्पुनः—न पटीक्षेपोऽपटीक्षेप इति विग्रहं विधाय पटीक्षेपं विनैव प्रविशन्तीति समर्थयन्ते तदप्यापाद्यकुचोद्यमात्रमित्यास्तां तावत् । पुरूरवसः प्रवेशे त्वपटीक्षेपो युक्तोऽसूचितत्वात् । अपटी जवनिका तस्याः क्षेपेण सारणेन । 'अपटी काण्डपटः स्यात्प्रतिसीरा जवनिका तिरस्करिणी ।' इति हलायुधः । **राजा** । मामेत्य मां प्राप्य । 'समेत्य' इति पाठे मिलित्वा । **रम्भा** । असुरावलेपात् । अवलेपो गर्वः । 'अवलेपस्तु दोषे स्याद्गर्वे लेपे च संगमे ।' इति विश्वलोचनः । 'अवलेपादो' इत्यत्र 'आदो दहय–' इति पञ्चम्यामादो

**राजा**—किं पुनरसुरावलेपेन भवतीनामपराद्धम् ।

**रम्भा**—सुणादु[1] महाराओ । जा तवोविसेससङ्किदस्स सुउमारं पहरणं महेन्दस्स, पच्चादेसो रूवगव्विदाए सिरिगोरिए, अलंकारो सग्गस्स, सा णो पिअसही उव्वसी कुबेरभवणादो णिअत्तमाणा केणावि दाणवेण चित्तलेहादुदीआ अद्धपथं ज्जेव बन्दिग्गाहं गिहीदा ।

**राजा**—अपि ज्ञायते कतमेन दिग्विभागेन गतः स जाल्मः ।

**अप्सरसः**—ईसाणीए[2] दिसाए ।

**राजा**—तेन हि मुच्यतां विषादः । यतिष्ये वः सखीप्रत्यानयनाय ।

**अप्सरसः**—सरिसं[3] एदं सोमवंससंभवस्स ।

**राजा**—क्व पुनर्मां भवत्यः प्रतिपालयिष्यन्ति ।

---

१. श्रृणोतु महाराजः । या तपोविशेषशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्वितायाः श्रीगौर्याः, अलंकारः सर्गस्य, सा नः प्रियसख्युर्वशी कुबेरभवनान्निवर्तमाना केनापि दानवेन चित्रलेखाद्वितीया अर्धपथ एव बन्दिग्राहं गृहीता ।

२. ऐशान्या दिशा ।

३. सदृशमेतत्सोमवंशसंभवस्य ।

---

इत्यादेशः ॥ **रम्भा** । श्रृणोतु महाराजः । या तपोविशेषशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्वितायाः श्रीगौर्याः, अलंकारः सर्गस्य, सा नः प्रियसखी उर्वशी कुबेरभवनान्निवर्तमाना केनापि दानवेन चित्रलेखाद्वितीया अर्धपथ एव बन्दिग्राहं गृहीता । 'परिवर्तमाना सहसा' इति, 'हिरण्यपुरवासिना केशिना दानवाधिपेन' इत्यपि क्वचित्पाठः । प्रहरणमायुधम् । 'आयुधं तु प्रहरणं शस्त्रमस्त्रम्' इति त्रिकाण्डी । 'प्रत्यादेशो निराकृतिः' इति च सा । सर्गस्य संसारस्य । चित्रलेखानामाप्सरा उर्वशीसखी । बन्दीव गृहीत्वा बन्दिग्राहम् । हिरण्यपुराख्यं नगरम् । 'जाल्मोऽसमीक्ष्यकारी' इति त्रिकाण्डी ॥ **अप्सरसः** । ऐशान्या दिशा । 'पूर्वोत्तरेण' इत्यपि पाठः । पूर्वोत्तरयोरन्तरालेनेत्यर्थः ॥ **अप्सरसः** । सदृशमेतत्सोमवंशसंभवस्य । प्रतिपालनं प्रतीक्षा ॥ **अप्सरसः** । ए-

अप्सरसः—एंदस्सिं हेमकूडसिहरे ।

राजा—सूत, ऐशानीं दिशं प्रति चोदयाश्वानाशुगमनाय ।

सूतः—यदाज्ञापयत्यायुष्मान् । (इति यथोक्तं करोति ।)

राजा—(रथवेगं रूपयित्वा ।) साधु साधु । अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयमप्यासादयेयम्, किं पुनस्तमपकारिणं मघोनः । मम

अग्रे यान्ति रथस्य रेणुपदवीं चूर्णीभवन्तो घना-
श्चक्रभ्रान्तिररान्तरेषु वितनोत्यन्यामिवारावलीम् ।
चित्रारम्भविनिश्चलं हरिशिरस्यायामवच्चामरं
यन्मध्ये समवस्थितो ध्वजपटः प्रान्ते च वेगानिलात् ॥ ५ ॥

(निष्क्रान्तो रथेन राजा सूतश्च ।)

सहजन्या—हेला, गदो राएसी । ता अम्हे वि जधासंदिट्ठं पदेसं गच्छम्ह ।

---

१. एतस्मिन्हेमकूटशिखरे ।

२. हला, गतो राजर्षिः । तद्वयमपि यथासंदिष्टं प्रदेशं गच्छामः ।

---

तस्मिन्हेमकूटशिखरे ॥ वैनतेयं गरुडम् । 'वैनतेयः खगेश्वरः' इति त्रिकाण्डी । रथवेगमेवाह—**अग्रे यान्तीति** । ममेति चूर्णकस्थितं रथस्येत्यत्र योज्यम् । 'मम' इत्यत्र 'तथा हि' इत्यपि पाठः । चूर्णीभवन्तो घना मम रथस्याग्रे रेणुपदवीं रेणुमार्गं यान्त्यनुसरन्ति । जलगुरवोऽपि जलदाश्चक्रधारया पिष्टीकृता मत्स्यन्दनाग्रतः पांसुवदुत्सर्पन्तीत्यर्थः । यद्वा रथस्याग्रेऽश्वखुरैश्चूर्णीभवन्तो मेघा रेणुपदवीं यान्ति । रेणवो यथाश्वोद्भूताः पाश्चात्यवातेनाग्रे नीयमाना अपि रथस्य वेगातिशयेन पश्चाद्भवन्ति, तथैतेऽपि रथरयात्पश्चाद्गच्छन्तीति भावः । 'रेणुवदमी' इत्यपि क्वचित्पाठः । अरान्तरेषु चक्रावयवीभूतमध्यकाष्ठान्तरालेष्वन्यामरावलीं तनोतीव । 'अरः शीघ्रे च चक्राङ्गे' इति विश्वः । रयातिशयाद्धि तादृशं भासत इति भावः । हरिशिरस्यश्वमस्तके भूषणार्थं बद्धमायामवद्दीर्घं चामरं चित्रे आरम्भो न्यासो यस्य तद्वन्निश्चलम् । जातमिति शेषः । 'चित्रन्यस्तमिवाचलम्' इत्यपि पाठः । अतिवेगेन निश्चलताश्वपुच्छादीनां प्रत्यक्षदृश्यैव । चः पूर्वसमुच्चये । प्रान्ते । विद्यमान इति शेषः । साहजिकवातेनेत्यर्थात् । ध्वजपटो वेगानिलाद्यन्मध्ये रथमध्यभागे समवस्थितः । अथवा प्रान्ते यन् गच्छन् । आद्यन्तचरणाभ्यां वातादपि रथस्यातिवेगवत्तरत्वं द्योतितम् ॥ ५ ॥ **सहजन्या** । हलेति

**मेनका**—सहि[1], एव्वं करेम्ह ।

(इति हेमकूटशिखरे नाट्येनाधिरोहन्ति ।)

**रम्भा**—अवि[2] णाम सो राएसी उद्धरदि णो हिअअसल्लम् ।

**मेनका**—सहि[3], मा दे संसओ भोदु ।

**रम्भा**—णं[4] दुज्जआ दाणवा ।

**मेनका**—उवट्ठिदसंपराओ[5] महिन्दो वि मज्झमलोआदो सबहुमाणं आणाविअ तं एव्व विबुधविजआअ सेणामुहे णिओजेदि ।

**रम्भा**—सव्वहा[6] विअई भोदु ।

**मेनका**—(क्षणमात्रं स्थित्वा ।) हला[7], समस्ससध समस्ससध ।

१. सखि, एवं कुर्मः ।

२. अपि नाम स राजर्षिरुद्धरति नो हृदयशल्यम् ।

३. सखि, मा ते संशयो भवतु ।

४. ननु दुर्जया दानवाः ।

५. उपस्थितसंपरायो महेन्द्रोऽपि मध्यमलोकात्सबहुमानमानाय्य तमेव विबुधविजयाय सेनामुखे नियुङ्क्ते ।

६. सर्वथा विजयी भवतु ।

७. सख्यः, समाश्वसित समाश्वसित । एष उल्लसितहरिणकेतनस्तस्य

सखीसंबुद्धिः । गतो राजर्षिः । 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ।' इति त्रिकाण्डी । सागरोऽपि—'महादेवी परीवारसमाह्वाने समुत्सुका । हञ्जे चेटीं प्रति प्राह सौम्ये च प्रियकारिणि ॥' इति । तद्वयमपि यथासंदिष्टं प्रदेशं गच्छामः ॥ **मेनका** । सखि, एवं कुर्मः ॥ **रम्भा** । अपि नाम स राजर्षिरुद्धरति नो हृदयशल्यम् । अपि नामेति संभावनायाम् ॥ **मेनका** । सखि, मा ते संशयो भवतु ॥ **रम्भा** । ननु दुर्जया दानवाः । नूनं नन्विति वा । **मेनका** । उपस्थितसंपरायो महेन्द्रोऽपि मध्यलोकात्सबहुमानमानाय्य तमेव विबुधविजयाय सेनामुखे नियुङ्क्ते । संपरायो युद्धम् । 'संप्रहारः' इति वा पाठः । 'संस्फोटः संपरायश्च संस्फेटः कलहेऽस्त्रियाम्' इति रूपचिन्तामणिः । 'संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ।' इति त्रिकाण्डी । मध्यमलोको मर्त्यः । 'पुंसि स्मृतौ मध्यमलोकमर्त्यौ' इति त्रिकाण्डीशेषः ॥ **रम्भा** । सर्वथा विजयी भवतु ॥ **मेनका** । सख्यः, समाश्वसित समाश्वसित । एष उल्लसितहरिणकेतनस्तस्य राजर्षेः सोमदत्तो रथो

एस उल्लसिदहरिणकेदणो तस्स राएसिणो सोमदत्तो रहो दीसदि। ण एसो अकिदत्थो पडिणिउत्तिस्सदि त्ति तक्केमि ।

(निमित्तं सूचयित्वावलोकयन्त्यः स्थिताः ।)

(ततः प्रविशति रथारूढो राजा सूतश्च । भयनिमीलिताक्षी चित्रलेखा-दक्षिणहस्तावलम्बिता उर्वशी च ।)

**चित्रलेखा**—सहि, समस्सस समस्सस ।

**राजा**—सुन्दरि, समाश्वसिहि ।

गतं भयं भीरु सुरारिसंभवं
त्रिलोकरक्षी महिमा हि वज्रिणः ।
तदेतदुन्मीलय चक्षुरायतं
निशावसाने नलिनीव पङ्कजम् ॥ ६ ॥

**चित्रलेखा**—अम्महे, कहं उस्ससिदमेत्तसंभाविदजीविदा अज्ज वि एसा सण्णं ण पडिवज्जदि ।

**राजा**—बलवदत्र ते सखी परित्रस्ता । तथाहि ।

मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः ।
मुहुरुच्छ्वसता मध्ये परिणाहवतोः पयोधरयोः ॥ ७ ॥

---

राजर्षेः सोमदत्तो रथो दृश्यते । नैषोऽकृतार्थः प्रतिनिवर्तिष्यत इति तर्कयामि ।

१. सखि, समाश्वसिहि समाश्वसिहि ।

२. अहो, कथमुच्छ्वसितमात्रसंभावितजीविता अद्याप्येषा संज्ञां न प्रतिपद्यते ।

---

दृश्यते । नैषोऽकृतार्थः प्रतिनिवर्तिष्यत इति तर्कयामि । हरिणकेतनो हरिणः केतने ध्वजे यस्य सः । सोमेन चन्द्रेण दत्तः । चन्द्रीयत्वादेव च हरिणध्वजत्व-मपि युक्तम् ॥ **चित्रलेखा** । सखि, समाश्वसिहि समाश्वसिहि ॥ **गतमिति** । सुरारिसंभवभयगमने हेतुमाह—हि यतो वज्रिण इन्द्रस्य महिमा त्रिलोकरक्षी । वर्तेत इति शेषः । अन्यथास्य त्रिलोकरक्षित्वमेव व्याहन्येतेति भावः ॥ ६ ॥ **चित्रलेखा** । अम्महे इत्याश्चर्ये । कथमुच्छ्वसितमात्रसंभावितजीवि-ता अद्याप्येषा संज्ञां न प्रतिपद्यते चेतनां न प्राप्नोति ॥ बलवदतिशयेन । **मन्दा-**

**चित्रलेखा**—(सकरुणम् ।) हला उव्वसि, पज्जवत्थावेहि अत्ताणम् । अणच्छरा विअ पडिभासि ।

**राजा**—

मुञ्चति न तावदस्या भयकम्पः कुसुमकोमलं हृदयम् ।
सिचयान्तेन कथंचित्स्तनमध्योच्छ्वासिना कथितः ॥ ८ ॥

(उर्वशी प्रत्यागच्छति ।)

**राजा**—(सहर्षम् ।) चित्रलेखे, दिष्ट्या वर्धसे । प्रकृतिमापन्ना ते प्रियसखी । पश्य ।

आविर्भूते शशिनि तमसा रिच्यमानेव रात्रि-
नैंशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुच्यमाना
गङ्गा रोधःपतनकलुषा गच्छतीव प्रसादम् ॥ ९ ॥

१. सखि उर्वशी, पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि ।

---

**रेति** । मन्दाराख्यकल्पवृक्षपुष्पमालया । 'परिणाहो विशालता' इत्यमरः ॥ ७ ॥ **चित्रलेखा** । सखि उर्वशि, पर्यवस्थापयात्मानम् । अनप्सरेव प्रतिभासि । पर्यवस्थापय स्थिरीकुरु । धैर्यं धारयेति भावः । अनप्सरेवेति । अधैर्यं हि मनुष्याणामुचितम्, न दैवतानामिति भावः । 'आपः सुमनसो वर्षा अप्सरसः सिकताः समाः । एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रिकम् ॥' इति ॥ **मुञ्चतीति** । सिचयं (यः) वस्त्रम् । 'वस्त्रं सिचयः पटः पोतः' इति हलायुधः ॥ ८ ॥ **दिष्ट्या वर्धस इति** । उत्सवान( ववत्य )सीत्यर्थः । हर्षवान् (वती) वा । 'दिष्ट्यापूर्वो वर्धतिरुत्सवे' इति सागरः । 'दिष्टिर्मुदि परीमाणे दिष्टिः कालोपदिष्टयोः ।' इति विश्वलोचनः । उत्सवे कारणमाह—**प्रकृतीति** । प्रकृति स्वभावम् । आपन्ना प्राप्ता । तत्प्राप्तिमेवाह—**आविर्भूत इति** । आविर्भूते प्रकटीभूते । रिच्यमाना रिक्तीभवन्ती । निशासंबन्धिनो हुतभुजोऽग्नेश्छिन्नभूयिष्ठो धूमो यस्या एतादृश्यर्चिर्ज्वालेव । 'अर्चिर्हेतिः शिखा स्त्रियाम्' इति त्रिकाण्डी । 'प्रायेणार्चिः स्त्री' इति क्षीरस्वामी । 'ज्वाला भासो नपुंस्यर्चिः' इत्यनेकार्थेऽपि । अन्तर्मध्ये रोधसस्तटस्य पतनेन कलुषा गङ्गेव । अन्तरन्तःकरणे मोहेन मुच्यमाना त्यज्यमानेयं वरतनुः प्रसादं प्रसन्नतां गच्छति प्राप्नोतीवेति लक्ष्यते । 'गृह्णतीव' इत्यपि

**चित्रलेखा**—[1]सहि उव्वसि, वीसद्धा भव । आवण्णाणुकम्पिणा महाराएण पडिहृदा क्खु दे तिदसपरिबन्थिणो हृदासा दाणवा ।

**उर्वशी**—(चक्षुषी उन्मील्य ।) [2]किं पहावदंसिणा महिन्देण अब्भुववण्णह्मि ।

**चित्रलेखा**—[3]ण महिन्देण । महिन्दसरिसाणुभावेण राएसिणा पुरूरवसेण ।

**उर्वशी**—(राजानमवलोक्य । आत्मगतम् ।) [4]उवकिदं क्खु दाणवेन्दसंरम्भेण ।

**राजा**—(उर्वशीं विलोक्य । आत्मगतम् ।) स्थाने खलु नारायणमृषिं विलोभयन्त्यस्तदूरुसंभवामिमां विलोक्य व्रीडिताः सर्वा अप्सरस इति । अथवा नेयं तपस्विनः सृष्टिरित्यवैमि । कुतः ।

---

१. सखि उर्वशि, विस्रब्धा भव । आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः ।

२. किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि ।

३. न महेन्द्रेण । महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा ।

४. उपकृतं खलु दानवेन्द्रसंरम्भेण ।

---

क्वचित्पाठः ॥ ९ ॥ **चित्रलेखा** । सखि उर्वशि, विस्रब्धा भव । आपन्नानुकम्पिना महाराजेन प्रतिहताः खलु ते त्रिदशपरिपन्थिनो हताशा दानवाः । विस्रब्धा विश्वासयुक्ता । आपन्नो विपद्ग्रस्तः । अनुकम्पिना दयावता । 'वीसद्धा भव' इत्यत्र 'ईर्त्सिंहजिह्वयोश्च' इति चकाराद्वेरीद्भावः ॥ **उर्वशी** । किं प्रभावदर्शिना महेन्द्रेणाभ्युपपन्नास्मि । अभ्युपपत्तिरनुग्रहः ॥ **चित्रलेखा** । न महेन्द्रेण । महेन्द्रसदृशानुभावेन राजर्षिणा पुरूरवसा ॥ **उर्वशी** । आत्मगतलक्षणं तु—'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।' इति साहित्यदर्पणे । 'स्वगतं चात्मगतं स्वयं(?)त्रिपताकेन पाणिना । यः पठेत्तत्र संयोज्यं द्वयमेतत्प्रयोक्तृभिः ॥' इति सागरोऽपि । उपकृतं खलु दानवेन्द्रसंरम्भेण । संरम्भस्त्रासः कोपो वा । 'संरम्भः संभ्रमे कोपे' इति विश्वः ॥ स्थाने युक्तम् । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । तपस्यतो नारायणस्य प्रलोभनार्थं गता अप्सरसस्तदूरूत्पन्नामिमामालोक्य

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ १० ॥

**उर्वशी**—हला चित्तलेहे, सहीअणो कहिं क्खु भवे ।

**चित्रलेखा**—सहि, अभअप्पदाई महाराओ जाणादि ।

**राजा**—(उर्वशीं विलोक्य ।) महति विषादे वर्तते सखीजनः । पश्यतु भवती ।

यदृच्छया त्वं सकृदप्यवन्ध्ययोः
पथि स्थिता सुन्दरि यस्य नेत्रयोः ।
त्वया विना सोऽपि समुत्सुको भवे-
त्सखीजनस्ते किमुतार्द्रसौहृदः ॥ ११ ॥

**उर्वशी**—(आत्मगतम् ।) अमिअं क्खु देव अणम् । अहवा चन्दादो अमिअं त्ति किं अच्चरिअम् । (प्रकाशम् ।) अदो एव्व मे पेक्खिदं तुवरदि हिअअम् ।

१. सखि चित्रलेखे, सखीजनः कुत्र खलु भवेत् ।

२. सखि, अभयप्रदायी महाराजो जानाति ।

३. अमृतं खलु ते वचनम् । अथवा चन्द्रादमृतमिति किमाश्चर्यम् । अत एव मे प्रेक्षितुं त्वरते हृदयम् ।

यस्योरुत एतादृशी सुन्दरी निःसृता किमिदानीमस्माभिरेतादृशस्य प्रलोभनं विधेयमिति लज्जिताः पुनः प्रतिनिवृत्ता इति पौराणिकी कथाप्रथा । **अस्या इति** । सर्गविधावुत्पादनविधौ । प्रजापतिः स्रष्टा । पुष्पाकरो मासो वसन्तः । जडो मन्दप्रज्ञः । कान्तिप्रदत्वादीनि विशेषणानि हेतुगर्भाणि ॥ १० ॥ **उर्वशी** । सखि चित्रलेखे, सखीजनः कुत्र खलु भवेत् । खल्विति प्रश्ने ॥ **चित्रलेखा** । सखि, अभयप्रदायी महाराजो जानाति ॥ **यदृच्छयेति** । यदृच्छया स्वेच्छया । अवन्ध्ययोः सफलयोः । 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः । नेत्रयोः पथि स्थिता नयनगोचरीभूता । समुत्सुकः सोत्कण्ठः आर्द्रं निरन्तरसहवासेन सरसं सौहृदं सौहार्दं यस्य सः ॥ ११ ॥ **उर्वशी** । ह्यमृतं खलु ते वचनम् । क्वचित् 'अभिजातम्' इति पाठः । अभिजातं योग्यम् । अथवा चन्द्रादमृतमिति किमाश्च-

**राजा**—(हस्तेन दर्शयन् ।)

एताः सुतनु मुखं ते सख्यः पश्यन्ति हेमकूटगताः ।
उत्सुकनयना लोकाश्चन्द्रमिवोपप्लवान्मुक्तम् ॥ १२ ॥

(उर्वशी साभिलाषं पश्यति ।)

**चित्रलेखा**—[1]हला, किं पेक्खसि ।

**उर्वशी**—[2]णं समदुक्खगदो पिवीअदि लोअणेहिं ।

**चित्रलेखा**—(सस्मितम् ।) [3]अइ, को ।

**उर्वशी**—[4]णं पणइअणो ।

**रम्भा**—(सहर्षमवलोक्य ।) [5]हला, चित्तलेहादुदीअं पिअसहीं उव्वसीं गेण्हिअ विसाहासहिदो विअ भअवं सोमो समुवट्ठिदो राएसी ।

**मेनका**—(निर्वर्ण्य ।) [6]हला, दुवे वि णो एत्थ प्पिआ उवणदा । इअं पच्चाणीदा पिअसही, अअं च अपरिक्खदसरीरो राएसी दीसदि ।

---

१. सखि, किं प्रेक्षसे ।

२. ननु समदुःखगतः पीयते लोचनाभ्याम् ।

३. अयि, कः ।

४. ननु प्रणयिजनः ।

५. सखि, चित्रलेखाद्वितीयां प्रियसखीमुर्वशीं गृहीत्वा विशाखासहित इव भगवान्सोमः समुपस्थितो राजर्षिः ।

६. सखि, द्वे अपि नोऽत्र प्रिये उपनते । इयं प्रत्यानीता प्रियसखी, अयं चापरिक्षतशरीरो राजर्षिर्दृश्यते ।

र्यम् । प्रकाशम् । 'सर्वश्राव्यं प्रकाशं स्यात्' इति साहित्यदर्पणे । अत एव मे प्रेक्षितुं त्वरते हृदयम् ॥ **एता इति** । हेमकूटाख्यो गिरिः । उपप्लव उपरागः ॥ १२ ॥ **चित्रलेखा** । सखि, किं प्रेक्षसे ॥ **उर्वशी** । ननु समदुःखगतः पीयते लोचनाभ्याम् ॥ **चित्रलेखा** । अयि, कः ॥ **उर्वशी** । ननु प्रणयिजनः ॥ **रम्भा** । सखि, चित्रलेखाद्वितीयां प्रियसखीमुर्वशीं गृहीत्वा विशाखासहित इव भगवान्सोमः समुपस्थितो राजर्षिः ॥ **मेनका** । सखि, द्वे अपि नोऽत्र प्रिये उपनते । इयं प्रत्या-

**सहजन्या**—[1]सहि, जुत्तं भणासि दुज्जओ दाणओ त्ति ।

**राजा**—सूत, इदं तच्छैलशिखरम् । अवतारय रथम् ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । (इति तथा करोति ।)

(उर्वशी रथावतारक्षोभं नाटयन्ती सत्रासं राजानमवलम्बते ।)

**राजा**—(स्वगतम् ।) हन्त, सफलो मे विषयावतारः ।

यदिदं रथसंक्षोभादङ्गेनाङ्गं ममायतेक्षणया ।
स्पृष्टं सरोमकण्टकमङ्कुरितं मनसिजेनेव ॥ १३ ॥

**उर्वशी**—[2]हला, किं वि परदो ओसर ।

**चित्रलेखा**—[3]णाहं सक्केमि ।

**रम्भा**—[4]एत्थ पिअआरिणं संभावेम्ह राएसिम् ।

(सर्वा उपसर्पन्ति ।)

**राजा**—सूत, उपश्लेषय रथम् ।

यावत्पुनरियं सुभ्रूरुत्सुकाभिः समुत्सुका ।
सखीभिर्याति संपर्कं लताभिः श्रीरिवार्तवी ॥ १४ ॥

(सूतो रथं स्थापयति ।)

**अप्सरसः**—[5]दिट्ठिआ महाराओ विजएण वड्ढदि ।

१. सखि, युक्तं भणसि दुर्जयो दानव इति ।
२. सखि, किमपि परतोऽपसर ।
३. नाहं शक्नोमि ।
४. अत्र प्रियकारिणं संभावयामो राजर्षिम् ।
५. दिष्ट्या महाराजो विजयेन वर्धते ।

नीता प्रियसखी, अयं चापरिक्षतशरीरो राजर्षिर्दृश्यत इति ॥ **सहजन्या** । सखि, युक्तं भणसि दुर्जयो दानव इति ॥ **यदिदमिति** । रथसंक्षोभान्निम्नोन्नतेषु स्यन्दनोपघातात् ॥ १३ ॥ **उर्वशी** । सखि, किमपि परतोऽपसर ॥ **चित्रलेखा** । नाहं शक्नोमि ॥ **रम्भा** । अत्र प्रियकारिणं संभावयामो राजर्षिम् ॥ उपश्लेषय स्थापय ॥ **यावदिति** । संपर्कं संबन्धम् । आर्तवी ऋतुसंबन्धिनी ॥ १४ ॥ **अप्सरसः** । दिष्ट्या महाराजो विजयेन वर्धते । दिष्ट्येत्यानन्दे । तथा

**राजा**—भवत्यश्च सखीसमागमेन ।

**उर्वशी**—(चित्रलेखादत्तहस्तावलम्बा रथादवतीर्य ।) [1]हला, अधिअं परिस्सजह । ण क्खु मे आसी आसासो जहा पुणो वि सहीअणं पेक्खिस्सं त्ति ।

(सख्यः परिष्वजन्ते ।)

**मेनका**—(साशंसम् ।) [2]सव्वहा कप्पसदं महाराओ पुहविं पालअन्तो होदु ।

**सूतः**—आयुष्मन्, पूर्वस्यां दिशि महता रथवेगेनोपदर्शितः शब्दः ।

अयं च गगनात्कोऽपि तप्तचामीकराङ्गदः ।
अधिरोहति शैलाग्रं तडित्वानिव तोयदः ॥ १५ ॥

**अप्सरसः**—(पश्यन्त्यः ।) [3]अम्मो, चित्तरहो ।

(ततः प्रविशति चित्ररथः ।)

**चित्ररथः**—(राजानं दृष्ट्वा सबहुमानम् ।) दिष्ट्या महेन्द्रोपकार-पर्याप्तेन विक्रममहिम्ना वर्धते भवान् ।

**राजा**—अये गन्धर्वराज । (रथादवतीर्य ।) स्वागतं प्रियसुहृदे ।

(परस्परं हस्तौ स्पृशतः ।)

---

१. सख्यः, अधिकं परिष्वजथ । न खलु मे आसीदाश्वासो यथा पुनरपि सखीजनं प्रेक्षिष्य इति ।

२. सर्वथा कल्पशतं महाराजः पृथिवीं पालयन्भवतु ।

३. अहो, चित्ररथः ।

---

चागदत्सागरः—'दिष्ट्येत्यानन्दने दिष्ट्यापूर्वो वर्धतिरुत्सवे ।' ॥ इति ॥ **उर्वशी** । सख्यः, अधिकं परिष्वजथ । न खलु मे आसीदाश्वासो यथा पुनरपि सखीजनं प्रेक्षिष्य इति ॥ **मेनका** । सर्वथा कल्पशतं महाराजः पृथिवीं पालयन्भवतु ॥ **अयमिति** । गगनादाकाशात् । चामीकरं सुवर्णम् । 'चामीकरं जातरूपं महार-जतकाञ्चने ।' इत्यमरः । अङ्गदं बाहुभूषणम् । शैलाग्रमधिरोहति । शैलाग्रे आरोहणं करोतीत्यर्थः । 'अवरोहति' इति पाठेऽवतरतीत्यर्थः । तडित्वांस्तडिद्युक्तः । तोयदो-ऽम्बुदः ॥१५॥ **अप्सरसः** । अम्मो इत्याश्चर्ये । तथा च सागरः—'अम्मो अम्म-ह इत्येतद्विस्मयद्योतनाविधौ ।' इति ॥ [**चित्ररथः** ।] पर्याप्तेन समर्थेन । विक्र-

**चित्ररथः**—वयस्य, केशिना हृतामुर्वशीं नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गन्धर्वसेना समादिष्टा । ततो वयमन्तरा चारणेभ्यस्त्वदीयं जयोदाहरणं श्रुत्वा त्वामिहस्थमुपागताः । स भवानिमां पुरस्कृत्य सहास्माभिर्मघवन्तं द्रष्टुमर्हति । महत्खलु तत्रभवतो मघोनः प्रियमनुष्ठितं भवता । पश्य ।

पुरा नारायणेनेयमतिसृष्टा मरुत्वते ।
दैत्यहस्तादपाच्छिद्य सुहृदा संप्रति त्वया ॥ १६ ॥

**राजा**—सखे, मैवम् ।

ननु वज्रिण एव वीर्यमेत-
द्विजयन्ते द्विषतो यदस्य पक्ष्याः ।
वसुधाधरकंदराविसर्पी
प्रतिशब्दो हि हरेर्हिनस्ति नागान् ॥ १७ ॥

**चित्ररथः**—युक्तमेतत् । अनुत्सेकः खलु विक्रमालंकारः ।

**राजा**—सखे, नायमवसरो मम शतक्रतुं द्रष्टुम् । अतस्त्वमेवात्रभवतीं प्रभोरन्तिकं प्रापय ।

**चित्ररथः**—यथा भवान्मन्यते । इत इतो भवत्यः ।

(सर्वाः प्रस्थिताः ।)

---

ममहिम्ना पराक्रमातिशयेन ॥ स्वागतं प्रियसुहृदे इति 'चतुर्थी चाशिष्य–' इति चतुर्थी ॥ केशिना तन्नामकेन दानवेन । जयोदाहरणं यशः । **पुरेति** । मरुत्वते इन्द्राय । 'इन्द्रो मरुत्वान्मघवा' इति त्रिकाण्डी । अतिसृष्टा दत्ता । अपाच्छिद्य बलाद्गृहीत्वा ॥ १६ ॥ **नन्विति** । वीर्यं पराक्रमः । पक्षे भवाः पक्ष्याः पार्श्ववर्तिनः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु ।' इति त्रिकाण्डी । द्विषतः शत्रून् । वसुधाधरः पर्वतः । कंदरा दरी । विसर्पी प्रसरणशीलः । प्रतिशब्दः प्रतिध्वनिः । हरेः सिंहस्य । नागान्गजान् । हिनस्ति मारयति ॥ १७ ॥ अनुत्से-

**उर्वशी**—(जनान्तिकम् ।) [1]हला चित्तलेहे, उवआरिणं राएसिं ण सक्कणोमि आमन्तेदुम् । ता तुमं एव्व मे मुहं होहि ।

**चित्रलेखा**—(राजानमुपेत्य ।) [2]महाराअ, उव्वसी विण्णवेदि—महाराएण अब्भणुण्णादा इच्छामि पिअसहिं विअ महाराअस्स किर्त्तिं सुरलोअं णेदुम् ।

**राजा**—गम्यतां पुनर्दर्शनाय ।

(सर्वाः सगन्धर्वा आकाशोत्पतनं रूपयन्ति ।)

**उर्वशी**—(उत्पतनभङ्गं रूपयित्वा ।) [3]अम्मो, लदाविडवे एसा एआवली वैअअन्तिआ मे लग्गा । (सव्याजमुपसृत्य राजानं पश्यन्ती ।) सहि चित्तलेहे, मोआवेहि दाव णम् ।

**चित्रलेखा**—(विलोक्य विहस्य च ।) [4]आम्, दिढं क्खु लग्गा सा । असक्का मोआविदुम् ।

---

१. सखि चित्रलेखे, उपकारिणं राजर्षिं न शक्नोम्यामन्त्रयितुम् । तत्त्वमेव मे मुखं भव ।

२. महाराज, उर्वशी विज्ञापयति—महाराजेनाभ्यनुज्ञातेच्छामि प्रियसखीमिव महाराजस्य कीर्तिं सुरलोकं नेतुम् ।

३. अहो, लताविटप एषैकावली वैजयन्तिका मे लग्ना । सखि चित्रलेखे, मोचय तावदेनाम् ।

४. आम्, दृढं खलु लग्ना सा । अशक्या मोचयितुम् ।

कोऽनभिमानः । **उर्वशी** । सखि चित्रलेखे, उपकारिणं राजर्षिं न शक्नोम्यामन्त्रयितुम् । तत्त्वमेव मे मुखं भव । जनान्तिकलक्षणं तु—'त्रिपताककरेणान्यानपवार्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥' इति साहित्यदर्पणादौ । 'वञ्चयित्वैकमन्योन्यं द्वाभ्यां यत्खलु पठ्यते । जनान्तिकं तु तत्कार्यं त्रिपताकेन पाणिना ॥' इति सागरोऽपि ॥ **चित्रलेखा** । महाराज, उर्वशी विज्ञापयति—महाराजेनाभ्यनुज्ञातेच्छामि प्रियसखीमिव महाराजस्य कीर्तिं सुरलोकं नेतुम् ॥ **उर्वशी** । अम्मो इति आश्चर्ये । लताविटप एषैकावली वैजयन्तिका मे लग्ना । सखि चित्रलेखे, मोचय तावदेनाम् । वैजयन्तिकेत्येकावलीनाम ॥ **चित्रलेखा** । आमित्यङ्गीकारे । दृढं खलु लग्ना सा ।

**उर्वशी**—अलं पडिहासेन । मोआवेहि दाव णम् ।

**चित्रलेखा**—आम्, दुम्मोआ विअ मे पडिहादी । तहा वि मोआविस्सं दाव ।

**उर्वशी**—(स्मितं कृत्वा ।) पिअसहि, सुमरेहि क्खु एदं अत्तणो वअणम् ।

**राजा**—(स्वगतम् ।)

प्रियमाचरितं लते त्वया मे
गमनेऽस्याः क्षणविघ्नमाचरन्त्या ।
यदियं पुनरप्यपाङ्गनेत्रा
परिवृत्तार्धमुखी मया हि दृष्टा ॥ १८ ॥

(चित्रलेखा मोचयति । उर्वशी राजानमालोकयन्ती सनिःश्वासं सखीजनमुत्पतन्तं पश्यति ।)

**सूतः**—आयुष्मन्,

अदः सुरेन्द्रस्य कृतापराधा-
न्प्रक्षिप्य दैत्यांल्लवणाम्बुराशौ ।
वायव्यमस्त्रं शरधिं पुनस्ते
महोरगः श्वभ्रमिव प्रविष्टम् ॥ १९ ॥

**राजा**—तेन ह्युपश्लेषय रथम्, यावदारोहामि ।

(सूतस्तथा करोति । राजा नाट्येन रथमारोहति ।)

१. अलं परिहासेन । मोचय तावदेनाम् ।

२. आम्, दुर्मोच्येव मे प्रतिभाति । तथापि मोचयिष्ये तावत् ।

३. प्रियसखि, स्मरस्व खल्वेतदात्मनो वचनम् ।

अशक्या मोचयितुम् ॥ **उर्वशी** । अलं परिहासेन । मोचय तावदेनाम् ॥ **चित्रलेखा** । आम्, दुर्मोच्येव मे प्रतिभाति । तथापि मोचयिष्ये तावत् ॥ **उर्वशी** । प्रियसखि, स्मरस्व खल्वेतदात्मनो वचनम् ॥ **प्रियमिति** । आचरितं कृतम् । क्षणमात्रं विघ्नम्, क्षण उत्सवस्तद्रूपं विघ्नमिति वा । परिवृत्तमर्धं मुखं यस्या अतएवापाङ्गयुक्ते नेत्रे यस्या एतादृशी दृष्टा । यद्वा अपाङ्गो मदनस्तज्जनके नेत्रे यस्यास्तादृशी ॥ १८ ॥ **अद इति** । वायुर्देवतास्येति वायव्यम् । शरधिं निषङ्गम् । श्वभ्रं रन्ध्रम् । 'रन्ध्रं श्वभ्रं वपा सुषिः' इति त्रिकाण्डी ॥ १९ ॥

**उर्वशी**—(सस्पृहं राजानमवलोकयन्ती ।) अवि णाम पुणो वि उअआरिणं एदं पेक्खिस्सम् ।

(इति सगन्धर्वा सह सखीभिर्निष्क्रान्ता ।)

**राजा**—(उर्वशीवर्त्मोन्मुखः ।) अहो, दुर्लभाभिलाषी मदनः ।

एषा मनो मे प्रसभं शरीरा-
त्पितुः पदं मध्यममुत्पतन्ती ।
सुराङ्गना कर्षति खण्डिताग्रा-
त्सूत्रं मृणालादिव राजहंसी ॥ २० ॥

(इति निष्क्रान्तौ ।)

**प्रथमोऽङ्कः ।**

१. अपि नाम पुनरप्युपकारिणमेतं प्रेक्षिष्ये ।

उपश्लेषय समीपे समानय ॥ **उर्वशी ।** अपि नाम पुनरप्युपकारिणमेतं प्रेक्षिष्ये ॥ दुर्लभमुर्वशीरूपं वस्त्वभिलषति तच्छीलः । 'दुर्लभाभिनिवेशी' इति पाठे अभिनिवेश आग्रहः । **एषेति ।** पितुर्निजजनकस्य नारायणस्य मध्यमं पदमाकाशम् । 'वियद्विष्णुपदम्' इति त्रिकाण्डी । उत्पतन्त्युद्गच्छन्ती । अत्रैषा सुराङ्गना मन्मनः कर्षतीत्यनेनाग्रिमाङ्कोपवर्ण्यराजोत्कण्ठा, तस्याश्च देव्याः परिज्ञानायङ्कावताराख्यार्थोपक्षेपकेनासूचि । अङ्कावतारलक्षणं तु साहित्यदर्पणकृदाह— 'अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः । यत्राङ्कोऽवतरत्यन्योऽङ्कावतार इति स्मृतः ॥' इति । पात्रैरिति बहुवचनमविवक्षितम् ॥२०॥ निष्क्रान्तौ । राजा सूतश्चेत्यर्थः । बहुवचनान्तपाठे तु तद्दिनीयाभिनयसमाप्तेः सभ्यादयोऽपि निष्क्रान्ता इत्यर्थः ॥ **प्रथमोऽङ्क इति ।** अङ्कलक्षणं प्राह साहित्यदर्पणकृत्—'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः । भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ विच्छिन्नावान्तरैकार्थः किंचित्संलग्नबिन्दुकः । युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ॥ नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् । आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥ नानेकदिननिर्वर्त्यकथया संप्रयोजितः । आसन्ननायकः पात्रैर्युक्तस्त्रिचतुरैस्तथा ॥ दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः । विवाहो भोजनं शापोत्सर्गो मृत्यू रतं तथा ॥ दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत् । शयनाधरपानादि नगराद्युपरोधनम् ॥ स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः । देवीपरिजनादीनाममात्यवणिजामपि ॥ प्रत्यक्षचित्रचरितैर्युक्तो भावरसोत्तरैः । अन्ते निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥' इति ॥ **इति श्रीमद्विद्वद्वृन्दपुरंदरयायजूकप्रवरश्रीत्र्यम्बकेरोपनामकमौनिकुलमौलिमण्डनश्रीरङ्गनाथदीक्षितकुक्षिजविबुधवरश्रीबालकृष्णभट्टसूरिसूनुश्रीरङ्गनाथविरचितायां विक्रमोर्वशीप्रकाशिकायां प्रथमाङ्कोन्मेषः ॥**

# द्वितीयोऽङ्कः ।

(ततः प्रविशति विदूषकः ।)

**विदूषकः**—[1]अविद अविद भोः, णिमन्तणिओ परमण्णेण विअ राअरहस्सेण फुट्टमाणो ण सक्कणोमि जनाइण्णे अइण्णणेण अत्तणो जीहं धारिदुम् । ता जाव सो राआ धम्मासणगदो इदो आअच्छइ दाव इमस्सिं विरलजणसंपादे देवच्छन्दअप्पासादे आरुहिअ चिट्ठिस्सम् । (परिक्रम्योपविश्य पाणिभ्यां मुखं पिधाय स्थितः ।)

(ततः प्रविशति चेटी ।)

**चेटी**—[2]आणत्तम्हि देवीए कासिराअदुहिदाए जधा—हञ्जे णिउणिए, जदो पहुदि भअवदो सुज्जस्स उअत्थाणं कदुअ पडिणिउत्तो महाराओ तदो पहुदि सुण्णहिअओ बिअ लक्खीअदि । ता तुमं वि

---

१. अविदाविद भोः, निमन्त्रणिकः परमान्नेनेव राजरहस्येन स्फुटन्न शक्नोमि जनाकीर्णेऽकीर्तनेनात्मनो जिह्वां धारयितुम् । तद्यावत्स राजा धर्मासनगत इत आयाति तावदेतस्मिन्विरलजनसंपाते देवच्छन्दकप्रासाद आरुह्य स्थास्ये ।

२. आज्ञप्तास्मि देव्या काशिराजदुहित्रा यथा—हञ्जे निपुणिके, यतः प्रभृति भगवतः सूर्यस्योपस्थानं कृत्वा प्रतिनिवृत्तो महाराजस्ततः प्रभृति शून्यहृदय इव लक्ष्यते । तत्त्वमपि तावदार्यमाणवकाज्जानीह्यस्योत्क-

---

इदानीं विदूषकमुखेनाग्रिमकथासूचनार्थं विदूषकप्रवेशमाह—**तत इति**। विदूषकलक्षणं तु—'विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः ।' विश्वनाथकविराजोऽप्याह—'कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥' स्वकर्म भोजनादि । सागरोऽप्यगदत्—'वयस्यकश्चाटुपटुः स एव च विदूषकः । अन्तःपुरचरो राज्ञां नर्मामात्यः प्रकीर्तितः ॥' इति । **विदूषकः** । अविदाविद भोः । 'अदृष्टाश्रुतसंप्राप्तावविदाविदभोःपदम् ।' इति सागरः । निमन्त्रणिकः परमान्नेनेव राजरहस्येन स्फुटन्न शक्नोमि जनाकीर्णेऽकीर्तनेनात्मनो जिह्वां धारयितुम् । तद्यावत्स राजा धर्मासनगत इत आयाति तावदेतस्मिन्विरलजनसंपाते देवच्छन्दकप्रासाद आरुह्य स्थास्ये । 'परमान्नं तु पायसम्' इति त्रिकाण्डी । 'जीअम्' इति पाठे जीवमित्यर्थः । देवच्छन्दक इति प्रासादनाम ॥ **चेटी** । आज्ञप्तास्मि देव्या काशिराजदुहित्रा

दाव अज्जमाणवआदो जाणाहि से उक्कण्ठाकारणं त्ति । ता कहं सो बम्हबन्धू अदिसंधादव्वो । अहवा तणग्गलग्गं विअ अवस्साअसलिलं ण तस्सिं राअरहस्सं चिरं चिट्ठदि त्ति तक्केमि । ता जाव णं अण्णेसामि । (परिक्रम्यावलोक्य च ।) अम्मो, आलेक्खवाणरो विअ किंपि मन्तअन्तो णिहुदो अज्जमाणअवो चिट्ठदि । ता जाव णं उवसप्पामि । (उपसृत्य ।) अज्ज, वन्दामि ।

**विदूषकः**—सैत्थि भोदीए । (आत्मगतम् ।) एदं दुट्ठचेडिअं पेक्खिअ तं राअरहस्सं हिअअं भिन्दिअ णिक्कमदि विअ । (किंचिन्मुखं संवृत्य । प्रकाशम् ।) भोदि णिउणिए, संगीदव्वावारं उज्झिअ कहिं पत्थिदासि ।

---

ण्ठाकारणमिति । तत्कथं स ब्रह्मबन्धुरतिसंधातव्यः । अथवा तृणाग्रलग्नमिवावश्यायसलिलं न तस्मिन्राजरहस्यं चिरं तिष्ठतीति तर्कयामि । तद्यावदेनमन्वेषयामि । अहो आलेख्यवानर इव किमपि मन्त्रयन्निभृत आर्यमाणवकस्तिष्ठति । तद्यावदेनमुपसर्पामि । आर्य, वन्दे ।

१. स्वस्ति भवत्यै । एतां दुष्टचेटिकां प्रेक्ष्य तद्राजरहस्यं हृदयं भित्त्वा निष्क्रामतीव । भवति निपुणिके, संगीतव्यापारमुज्झित्वा कुत्र प्रस्थितासि ।

---

यथा—हञ्जे चेटि निपुणिके, यतः प्रभृति भगवतः सूर्यस्योपस्थानं कृत्वा प्रतिनिवृत्तो महाराजस्ततः प्रभृति शून्यहृदय इव लक्ष्यते । तत्त्वमपि तावदार्यमाणवकाज्जानीह्यस्योत्कण्ठाकारणमिति । माणवकेति विदूषकनाम । तत्कथं स ब्रह्मबन्धुरतिसंधातव्यः । ब्रह्मबन्धुर्दुष्टविप्रः । 'ब्रह्मबन्धुरधिक्षेपे निर्देशेऽपि द्विजोत्तमे ।' इति विश्वलोचनः । अतिसंधातव्यो वञ्चनीयः । अथवा तृणाग्रलग्नमिवावश्यायसलिलं न तस्मिन्राजरहस्यं चिरं तिष्ठतीति तर्कयामि । तद्यावदेनमन्वेषयामि । अवश्यायो नीहारः । 'अवश्यायो हिमे वर्गे सततार्जनकर्मणि ।' इति विश्वलोचनः । अम्मो आश्चर्ये । आलेख्यवानर इव किमपि मन्त्रयन्निभृत आर्यमाणवकस्तिष्ठति । निभृतो निश्चलः । तद्यावदेनमुपसर्पामि । आर्य, वन्दे ॥ **विदूषकः ।**

**चेटी**—देवीएं वअणेण अज्जं एव्व पेक्खिदुम्।

**विदूषकः**—किं[2] तत्तभोदी आणवेदि।

**चेटी**—देवी[3] भणादि जधा—अज्जस्स मम उअरि अदक्खिण्णम्। ण मं अणुइदवेअणं दुक्खिदं अवलोअदि त्ति।

**विदूषकः**—णिउणिए[4], किं वा पिअवअस्सेण तत्तभोदीए पडिऊलं किंवि समाचरिदम्।

**चेटी**—[5]जं णिमित्तं उण भट्टा उक्कण्ठिदो, ताए इत्थिआए णामेण भट्टिणा देवी आलविदा।

---

१. देव्या वचनेनार्यमेव प्रेक्षितुम्।

२. किं तत्रभवत्याज्ञापयति।

३. देवी भणति यथा—आर्यस्य ममोपरि अदाक्षिण्यम्। न मामनुचितवेदनां दुःखितामवलोकयतीति।

४. निपुणिके, किं वा प्रियवयस्येन तत्रभवत्याः प्रतिकूलं किमपि समाचरितम्।

५. यन्निमित्तं पुनर्भर्ता उत्कण्ठितः, तस्याः स्त्रिया नाम्ना भर्त्रा देवी आलपिता।

---

स्वस्ति भवत्यै। 'नमःस्वस्ति–' इत्यादिना चतुर्थी। एतां दुष्टचेटिकां प्रेक्ष्य तद्राजरहस्यं हृदयं भित्त्वा निष्क्रामतीव। भवति निपुणिके, संगीतव्यापारमुज्झित्वा कुत्र प्रस्थितासि॥ **चेटी**। देव्या वचनेनार्यमेव प्रेक्षितुम्॥ **विदूषकः**। किं तत्रभवत्याज्ञापयति॥ **चेटी**। देवी भणति यथा—आर्यस्य ममोपरि अदाक्षिण्यम्। न मामनुचितवेदनां दुःखितामवलोकयतीति। अदाक्षिण्यमननुकूलता। मन्मुखसंकोचाभाव इति यावत्॥ **विदूषकः**। निपुणिके, किं वा प्रियवयस्येन तत्रभवत्याः प्रतिकूलं किमपि समाचरितम्॥ **चेटी**। यन्निमित्तं पुनर्भर्ता उत्कण्ठितः, तस्याः

**विदूषकः**—(स्वगतम् ।) [1]कहं सअं एव्व तत्तभअदा वअस्सेण रहस्सभेदो किदो । किं दाणीं अहं बह्मणो जीहं रक्खिदुं समत्थोम्हि । (प्रकाशम् ।) किं तत्तभोदा उव्वसीणामधेएण आमन्तिदा ।

**चेटी**—[2]अज्ज, का सा उव्वसी ।

**विदूषकः**—[3]अत्थि उव्वसि त्ति अच्छरा । ताए दंसणेण उम्मादिदो ण केवलं तं आआसेदि, मं वि बह्मणं असिदव्वविमुहं दिढं पीडेदि ।

**चेटी**—(स्वगतम् ।) [4]उव्वादिदो मए भेओ भट्टिणो रहस्सदुग्गस्स । ता गदुअ देवीए एदं णिवेदेमि । (इति प्रस्थिता ।)

**विदूषकः**—[5]णिउणिए, विण्णावेहि मम वअणेण कासिराअदुहिदरम्—परिस्सन्तम्हि इमाए मिअतिण्हिआए वअस्सं णिअत्तावेदुम् । जइ भोदीए मुहकमलं पेक्खिस्सदि तदो णिअत्तिस्सदि त्ति ।

---

१. कथं स्वयमेव तत्रभवता वयस्येन रहस्यभेदः कृतः । किमिदानीमहं ब्राह्मणो जिह्वां रक्षितुं समर्थोऽस्मि । किं तत्रभवता उर्वशीनामधेयेनामन्त्रिता ।

२. आर्य, का सा उर्वशी ।

३. अस्त्युर्वशीत्यप्सराः । तस्या दर्शनेनोन्मादितो न केवलं तामायासयति मामपि ब्राह्मणमशितव्यविमुखं दृढं पीडयति ।

४. उत्पादितो मया भेदो भर्तू रहस्यदुर्गस्य । तद्गत्वा देव्यै एतन्निवेदयामि ।

५. निपुणिके, विज्ञापय मम वचनेन काशिराजदुहितरम्—परिश्रान्तोऽस्म्येतस्या मृगतृष्णिकाया वयस्यं निवर्तयितुम् । यदि भवत्या मुखकमलं प्रेक्षिष्यते ततो निवर्तिष्यत इति ।

---

त्रिया नाम्ना भर्त्रा देवी आलपिता ॥ **विदूषकः** । कथं स्वयमेव तत्रभवता वयस्येन रहस्यभेदः कृतः । किमिदानीमहं ब्राह्मणो जिह्वां रक्षितुं समर्थोऽस्मि । किं तत्रभवता उर्वशीनामधेयेनामन्त्रिता ॥ **चेटी** । आर्य, का सा उर्वशी ॥ **विदूषकः** । अस्त्युर्वशीत्यप्सराः । तस्या दर्शनेनोन्मादितो न केवलं तामायासयति, मामपि ब्राह्मणमशितव्यविमुखं दृढं पीडयति । 'अशितव्यविमुखः' इत्यपि पाठः ॥ **चेटी** । उत्पादितो मया भेदो भर्तू रहस्यदुर्गस्य । तद्गत्वा देव्यै एतन्निवेदयामि ॥ **विदूषकः** । निपुणिके, विज्ञापय मम वचनेन काशिराजदुहितरम्—

**चेटी**—[1]जं अज्जो आणवेदि । (इति निष्क्रान्ता ।)

(नेपथ्ये वैतालिकः ।)

जयतु जयतु देवः ।

आ लोकान्तात्प्रतिहततमोवृत्तिरासां प्रजानां
तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः ।
तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये
षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः ॥ १ ॥

**विदूषकः**—(कर्णं दत्वा ।) एसो उण पिअवअस्सो धम्मासणसमुत्थिदो इदो एव आअच्छदि । ता जाव पासपडिवत्ती होमि । (इति निष्क्रान्तः ।)

**प्रवेशकः ।**

---

१. यदार्य आज्ञापयति ।

२. एष पुनः प्रियवयस्यो धर्मासनसमुत्थित इत एवागच्छति । तद्यावत्पार्श्वपरिवर्ती भवामि ।

---

परिश्रान्तोऽस्मि एतस्या मृगतृष्णिकाया वयस्यं निवर्तयितुम् । यदि भवत्या मुखकमलं प्रेक्षिष्यते ततो निवर्तिष्यत इति ॥ **चेटी** । यदार्य आज्ञापयति ॥ **नेपथ्य इति** । 'आ लोकान्तात्' इत्यारभ्य 'पासपडिवत्ती होमि' इत्यन्तेन चूलिकया राजागमनरूपार्थसूचनम् । 'अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचनम् ।' इति दाशरूपकीयादितल्लक्षणात् । **आ लोकान्तादिति** । आ लोकान्तात् लोकान्तमभिव्याप्यासां प्रजानां प्रतिहततमोवृत्तिर्निरस्तपापाचरणः । यद्वा आलोकान्तात् आलोकनमात्रात् आसां प्रजानां जनानां प्रतिहततमोवृत्तिः । राज्ञोऽतिधार्मिकत्वात्तेजोवत्त्वाच्च । यदालोकनमात्रेणैव दण्डादिभयेन प्रजाभिः पापाचरणं न क्रियत इति भावः । यदालोकनादपि जनान् पापं न पश्यतीति वा । उक्तं च—'अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः । दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत्सदा बुधः ॥' इति । पक्षे आलोकान्तात्प्रकाशस्वरूपात् । तमोवृत्तिरन्धकारावस्थानम् । 'लोकस्तु भुवने जने' इति त्रिकाण्डी । 'स्वरूपेऽन्तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु ।' इति विश्वलोचनः । एको ज्योतिषामधिपतिः सूर्यः क्षणं व्योममध्ये तिष्ठति । मध्याह्नसमय इत्यर्थात् । अह्नो दिवसस्य षष्ठे काले भागे त्वमपि विश्रान्तिं लभसे विश्रामं प्राप्नोषि । 'षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः' इति नीतिकृतश्चाणक्यादयः ॥ १ ॥ **विदूषकः** । एष पुनः प्रियवयस्यो धर्मासनसमुत्थित इत एवागच्छति । तद्यावत्पा-

(ततः प्रविशत्युत्कण्ठितो राजा विदूषकश्च ।)

**राजा**—

आ दर्शनात्प्रविष्टा सा मे सुरलोकसुन्दरी हृदयम् ।
बाणेन मकरकेतोः कृतमार्गमवन्ध्यपातेन ॥ २ ॥

**विदूषकः**—[1]सपीडा क्खु जादा तत्तभोदी कासिराअदुहिदा ।

**राजा**—(निरीक्ष्य ।) रक्ष्यते भवता रहस्यनिक्षेपः ।

**विदूषकः**—(आत्मगतम् ।) [2]वञ्चिदोह्मि दासीए णिउणिआए । अण्णधा कधं एव्वं पुच्छदि वअस्सो ।

१. सपीडा खलु जाता तत्रभवती काशिराजदुहिता ।

२. वञ्चितोऽस्मि दास्या निपुणिकया । अन्यथा कथमेवं पृच्छति वयस्यः ।

श्वपरिवर्ती भवामि ॥ **प्रवेशक इति** । विदूषकप्रवेशोत्तरमेतावत्संदर्भः प्रवेशकपदेनाभिधीयते । 'द्विधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः । सूच्यमेव भवेत्किंचिद्दृश्यश्रव्यमथापरम् ॥' इति पूर्वमुक्त्वा 'अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् । विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥' एवं पञ्चभिरभिनेयपात्रप्रवेशं सूचयेदित्यभिहितानां विष्कम्भकादीनां लक्षणानि शुद्धमिश्रादिभेदाश्च सोदाहरणा दशरूपकादौ विस्तरेण प्रतिपादितास्तत एवावगन्तव्याः, विस्तरभयान्नेह प्रपञ्चिताः । संक्षेपस्तु—'अधमपात्रेण पात्राभ्यां वा प्राकृतभाषिभ्यां सूचयेतिवृत्तसूचनं प्रवेशकः' इति । उक्तं च धनिकेन—'तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥' इति । तद्वदेवेति विष्कम्भकलक्षणोक्तं भूतभविष्यदर्थज्ञापकत्वं संक्षिप्तार्थत्वं चात्रादिश्यते । अङ्कद्वयस्यान्तरीति प्रथमाङ्केऽस्य निषेधः । यद्यपि चात्राङ्कद्वयस्यान्तरित्यविशेषेण प्रथमान्त्याङ्कयोः प्रवेशकनिषेधोऽवगम्यते, तथापि शेषाङ्के सर्वत्र तद्दर्शनात्प्रथमाङ्क एव केवलमस्य निषेध एतल्लक्षणकृतामभिप्रेतः । तथा च देवपाणिविरचितदशरूपकटीकायां साहसाङ्कीयटीकासंमतिरपि—'नासूचितस्य पात्रस्य प्रवेशः क्वचिदिष्यते । प्रवेशं सूचयेत्तस्मादमुख्याङ्के प्रवेशकात् ॥' मुख्याङ्कः प्रथमाङ्कः । एतेन मुख्याङ्केतराङ्के प्रवेशको बोद्धव्य इति । वस्तुतस्तु प्रवेशकोत्तरभाविनो ग्रन्थस्याङ्कशब्दवाच्यत्वादन्त्याङ्केऽप्यस्याङ्कद्वयान्तर्वर्तित्वं घटत एवेति युक्तः प्रथमाङ्कमात्रेऽस्य निषेध इत्यलं पल्लवलीलया ॥ **राजा । आदर्शनादिति** । आ दर्शनाद्दर्शनमारभ्य । मकरकेतोर्मदनस्य । अवन्ध्यः सफलः पातः पतनम् । 'वन्ध्योऽफलोऽवकेशी च' इति त्रिकाण्डी ॥ २ ॥ **विदूषकः** । सपीडा खलु जाता तत्रभवती काशिराजदुहिता ॥ **राजा** । रहस्यं गोप्यो-

**राजा**—किं भवांस्तूष्णीमास्ते ।

**विदूषकः**—[१]भो, एव्वं मए जीहा संजन्तिदा जेण भवदो वि णत्थि पडिवअणम् ।

**राजा**—युक्तम् । अथ केनेदानीमात्मानं विनोदयामि ।

**विदूषकः**—[२]भो, महाणसं गच्छह्म ।

**राजा**—किं तत्र ।

**विदूषकः**—[३]तहिं पञ्चविहस्स अब्भवहारस्स उवणदसंभारस्स जोअणां पेक्खमाणेहिं सक्कं उक्कण्ठां विणोदेदुम् ।

**राजा**—तत्रेप्सितसंनिधानाद्भवान्रंस्यते । मया खलु दुर्लभप्रार्थनः कथमात्मा विनोदयितव्यः ।

**विदूषकः**—[४]णं भवं वि तत्तभोदीए उव्वसीए दंसणपहं गदो ।

**राजा**—ततः किम् ।

**विदूषकः**—[५]णं क्खु दे दुलह त्ति तक्केमि ।

---

१. भोः, एवं मया जिह्वा संयन्त्रिता येन भवतोऽपि नास्ति प्रतिवचनम् ।

२. भोः, महानसं गच्छावः ।

३. तत्र पञ्चविधस्याभ्यवहारस्योपनतसंभारस्य योजनां प्रेक्षमाणाभ्यां शक्यमुत्कण्ठां विनोदयितुम् ।

४. ननु भवानपि तत्रभवत्या उर्वश्या दर्शनपथं गतः ।

५. न खलु ते दुर्लभेति तर्कयामि ।

---

ऽर्थः । 'रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु ।' इति त्रिकाण्डी ।........................... 'शक्यं श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्' इति महाभाष्यकारप्रयोगादुत्कण्ठां विनोदयितुं शक्यमिति साधु । निरुक्तं समयमनुसृत्य शक्यमित्यत्र शक्येत्यर्थ इति वा । 'बलवतीमुत्कण्ठाम्' इत्यपि पाठः ॥ **विदूषकः** । ननु भवानपि तत्रभवत्या उर्वश्या दर्शनपथं गतः ॥ **विदूषकः** । न खलु ते दुर्ले-

**राजा**—पक्षपातोऽपि तस्यां सद्रूपस्यालौकिक एव ।

**विदूषकः**—एव्वं[1] मन्तअन्तेण मे वड्ढिदं कोदूहलम् । किं तत्त-भोदी उव्वसी अदुदीआ रूपेण, अहं वीअ विरूवदाए ।

**राजा**—माणवक, प्रत्यवयवमशक्यवर्णनां तामवेहि । तेन हि समासतः श्रूयताम् ।

**विदूषकः**—भो[2], अवहिदोम्हि ।

**राजा**—

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥ ३ ॥

**विदूषकः**—अदो[3] दाव तुए दिव्वरसाहिलासिणा चादअव्वदं गहिदम् । ता दाव तुमं कहिं पत्थिदो ।

१. एवं मन्त्रयता मम वर्धितं कौतूहलम् । किं तत्रभवत्युर्वश्यद्वितीया रूपेण, अहमिव विरूपतया ।

२. भोः, अवहितोऽस्मि ।

३. अतस्तावत्त्वया दिव्यरसाभिलाषिणा चातकव्रतं गृहीतम् । तत्तावत्त्वं कुत्र प्रस्थितः ।

भेति तर्कयामि । यतस्त्वमेतादृशोऽनिर्वचनीयसौन्दर्यस्तद्दृक्पथं गतश्चेदवश्यं त्वयि बद्धभावा सा न ते दुर्लभेति भावः ॥ **पक्षपात इति** । सतः समीचीनस्य रूपस्य तस्यामुर्वश्यां पक्षपात आग्रहेणावस्थितिरलौकिकोऽतिविलक्षणः । कुत्राप्यदृष्ट-चर इति यावत् ॥ **विदूषकः** । एवं मन्त्रयता मम वर्धितं कौतूहलम् । किं तत्रभवत्युर्वश्यद्वितीया रूपेण, अहमिव विरूपतया ॥ समासतः संक्षेपतः ॥ **विदूषकः** । भोः, अवहितोऽस्मि ॥ **आभरणस्येति** । आभरणस्य कटककुण्ड-लादेराभरणं भूषकम् । निजवपुषैव परं तच्छोभितं विधीयत इति भावः । प्रसाध-नविधेर्यावकहरिद्रादिप्रतिकर्मणः प्रसाधनविशेषः । निरतिशयशोभाजनकमित्यर्थः । 'प्रतिकर्म प्रसाधनम्' इति त्रिकाण्डी । उपमानस्य चन्द्रादेः प्रत्युपमानम् । चन्द्रा-देः सकाशादाधिक्याच्चन्द्राद्येवैतस्योपमेयमित्यर्थः । उपमानं ह्यधिकगुणं भवती-त्यालंकारिकोद्घोषादिति भावः । अत्यपूर्वसौन्दर्यमिति रहस्यम् ॥ ३ ॥ **विदूषकः** । अतस्तावत्त्वया दिव्यरसाभिलाषिणा चातकव्रतं गृहीतम् । तत्तावत्त्वं कुत्र

**राजा**—विविक्ताद्दते नान्यदुत्सुकस्य शरणमस्ति । तद्भवान्प्रमदवनमार्गमादेशयतु ।

**विदूषकः**—(आत्मगतम् ।) का[1] गदी । (प्रकाशम् ।) इदो इदो भवम् ।

(इति परिक्रामतः ।)

**विदूषकः**—एसो[2] पमदवणपरिसरो । आणमिअ पत्तुवगदो भवं आअन्तुओ दक्खिणमारुदेण ।

**राजा**—(विलोक्य ।) उपपन्नं विशेषणमस्य वायोः । अयं हि

निषिञ्चन्माधवीं लक्ष्मीं लतां कौन्दीं च लासयन् ।
स्नेहदाक्षिण्ययोर्योगात्कामीव प्रतिभाति मे ॥ ४ ॥

---

१. का गतिः । इत इतो भवान् ।

२. एष प्रमदवनपरिसरः । आनम्य प्रत्युपगतो भवानागन्तुको दक्षिणमारुतेन ।

---

प्रस्थितः । 'दार्वाघाटस्तु सारङ्गः स्तोककश्चातकः समाः ।' इति त्रिकाण्डी ॥ विविक्ताद्विजनात् । 'विविक्तौ पूतविजनौ' इत्यमरः । 'विविधशिशिरोपचारात्' इत्यपि पाठः । शिशिरोपचारः शीतलवस्तुपरिशीलनम् । शरणं रक्षकम् । 'शरण गृहरक्षित्रोः' इति त्रिकाण्डी । **प्रमदवनमिति** । 'स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ।' इति च सा । **विदूषकः** । का गतिः । इत इतो भवान् ॥ **विदूषकः** । एष प्रमदवनपरिसरः । 'पर्यन्तभूः परिसरः' इत्यपि सैव । आनम्य प्रत्युपगतो भवानागन्तुको दक्षिणमारुतेन । प्रत्युपगतः कृतप्रत्युद्गमनः । दक्षिणमारुतेन दक्षिणदिगागतेन वायुना, अनुकूलेन च ॥ **राजा** । उपपन्नं युक्तम् । विशेषणं दक्षिणेत्युपसर्जनम् । **निषिञ्चन्निति** । माधवीं वासन्तीं लक्ष्मीं शोभां नितरां सिञ्चन् । अतिशयितां कुर्वन्नित्यर्थः । 'एताम्' इति पाठ एतां माधवीं वासन्तीं लतां निषिञ्चन्नतिमधुसंपन्नां कुर्वन् । कौन्दीं च लतां वल्लीं लासयन्नर्तयन् । 'वासन्ती माधवी लता' इत्यमरः । 'माघ्यं कुन्दम्' इति च सः । स्नेहः प्रेमा । दाक्षिण्यमानुकूल्यम् । माधव्या हि वासन्त्या नववयोविशेषशालिन्या भामिन्या इव निषेको माघ्याश्च कौन्द्या भ्रमरविसरापीतायाः प्रगल्भाया इव नर्तनमात्रमित्यहो कामिन इवास्य युक्तकारितेति भावः । एवं च माधवीमाघ्योर्ज्येष्ठाकनिष्ठाख्यनायिकाविशेषत्वं प्राकाशि ॥ ४ ॥ **विदूषकः** । सदृश एवास्या-

विदूषकः—[1]सरिसो एव्व से अहिणिवेसो । (इति परिक्रामन् ।) एदं पमदवणम् । पविसदु भवम् ।

राजा—वयस्य, प्रविशाग्रतः ।

(उभौ प्रवेशं नाटयतः ।)

राजा—(त्रासं रूपयित्वा ।) वयस्य, साधु मनसा समर्थित आपत्प्रतीकारः किल ममोद्यानप्रवेशः । तच्चान्यथैवोपपन्नम् ।

विविक्षोर्यदिदं नूनमुद्यानं नाघशान्तये ।
स्रोतसेवोह्यमानस्य प्रतीपतरणं महत् ॥ ५ ॥

विदूषकः—[2]कहं विअ ।

राजा—

इदमसुलभवस्तुप्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः क्षिणोति ।
किमुत मलयवातोन्मूलितापाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥ ६ ॥

विदूषकः—[3]अलं भवदो परिदेविदेण । अइरेण इट्ठसंपादइत्तओ अणङ्गो एव्व दे सहाओ भविस्सदि ।

---

१. सदृश एवास्याभिनिवेशः । एतत्प्रमदवनम् । प्रविशतु भवान् ।

२. कथमिव ।

३. अलं भवतः परिदेवितेन । अचिरेणेष्टसंपादयितानङ्ग एव ते सहायो भविष्यति ।

---

भिनिवेशः । 'ईदृश एव' इत्यपि पाठः । एतत्प्रमदवनम् । प्रविशतु भवान् ॥ **विविक्षोरिति** । विविक्षोः प्रवेष्टुमिच्छोः । महत्सर्वोत्कर्षशालि । उद्यानमुपवनम् । 'पुमानाक्रीड उद्यानम्' इत्यमरः । अघशान्तये दुःखनाशाय । 'दुःखैनोव्यसनेष्वघम्' इत्यमरः । स्रोतसा प्रवाहेणोह्यमानस्य प्राप्यमाणस्य प्रतीपतरणं प्रतिकूलप्लवनमिव ॥ ५ ॥ **विदूषकः** । कथमिव ॥ **इदमिति** । असुलभमुर्वशीरूपं वस्तु । प्रार्थना अभिलाषः । क्षिणोति कृशीकरोति । सहकारोऽतिसौरभ आम्रविशेषः । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ।' इति त्रिकाण्डी ॥ ६ ॥ **विदूषकः** । अलं भवतः परिदेवितेन । 'विलापः परिदेवनम्' इति

**राजा**—प्रतिगृहीतं ब्राह्मणवचनम् ।

(इति परिक्रामतः ।)

**विदूषकः**—पेक्खदु भवं वसन्तावदारसूइदं से अहिरामत्तणं पमदवणस्स ।

**राजा**—ननु प्रतिपदमेव तावदवलोकयामि । अत्र हि

अग्रे स्त्रीनखपाटलं कुरबकं श्यामं द्वयोर्भागयो-
बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता ॥७॥

**विदूषकः**—ऐसो कसणमणिसिलावट्टसणाहो अदिमुत्तलदामण्डओ भमरसंहविहडिदेहिं कुसुमेहिं किदोवआरो विअ अत्तभवदो वट्टदि । ता अणुग्गहीअदु एसो ।

**राजा**—यदभिरोचते भवते ।

(इत्युपविशतः ।)

**विदूषकः**—दाणिं इहासीणो ललिदलदालोहिअमाणलोअणो उव्वसीगदं उक्कण्ठं विणोदेदु भवम् ।

---

१. प्रेक्षतां भवान्वसन्तावतारसूचितमस्याभिरामत्वं प्रमदवनस्य ।

२. एष कृष्णमणिशिलापट्टसनाथोऽतिमुक्तलतामण्डपो भ्रमरसङ्घविघटितैः कुसुमैः कृतोपचार इवात्रभवतो वर्तते । तदनुगृह्यतामेषः ।

३. इदानीमिहासीनो ललितलतालोभ्यमानलोचन उर्वशीगतामुत्कण्ठां विनोदयतु भावान् ।

---

त्रिकाण्डी । अचिरेणेष्टसंपादयितानङ्ग एव ते सहायो भविष्यति ॥ **विदूषकः** । प्रेक्षतां भवान्वसन्तावतारसूचितमस्याभिरामत्वं प्रमदवनस्य ॥ **अग्र इति** । अग्रेऽग्रभागे स्त्रीनखवत्पाटलं श्वेतरक्तं कुरबकं शोणं कुरण्टककुसुमं द्वयोर्भागयोरुभयतः श्यामम् । 'तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः ।' इति त्रिकाण्डी । बालाशोकं नूतनमशोककुसुममुपोढरागसुभगमुत्कृष्टारक्ततासुन्दरं भेदोन्मुखं विकासोत्सुकम् । अनेन विशेषणद्वयेन मुग्धदशाप्रान्त उक्तः । 'ईषद्बद्ध–' इत्यादिना यौवनारम्भो वर्णितः ॥ ७ ॥ **विदूषकः** । एष कृष्णमणिशिलापट्टसनाथोऽतिमुक्तलतामण्डपो भ्रमरसङ्घविघटितैः कुसुमैः कृतोपचार इवात्रभवतो वर्तते । तदनुगृह्यतामेषः । 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ।' इति त्रिकाण्डी ॥ **विदूषकः** । इदानीमिहासीनो ललितलतालोभ्य-

**राजा**—(निःश्वस्य ।)

बहुकुसुमितास्वपि सखे नोपवनलतासु नम्रविटपासु ।
चक्षुर्बध्नाति धृतिं तदङ्गनालोकदुर्ललितम् ॥ ८ ॥

तदुपायश्चिन्त्यतां यथा सफलप्रार्थनो भवेयम् ।

**विदूषकः**—(विहस्य ।) [1]भो, अहल्लाकामुअस्स इन्दस्स वज्जं सचिवो, उव्वसीपज्जुस्सुअस्स भवदो वि अहम् । दुवे वि एत्थ उम्मत्तआ ।

**राजा**—न खलु चिन्तयति भवान् ।

**विदूषकः**—(चिन्तयति ।) [2]ऐसो चिन्तेमि । मा उण परदेवि-

१. भोः, अहल्याकामुकस्येन्द्रस्य वज्रं सचिवः, उर्वशीपर्युत्सुकस्य भवतोऽप्यहम् । द्वावप्यत्रोन्मत्तौ ।

२. एष चिन्तयामि । मा पुनः परिदेवितैः समाधिं भङ्क्ष्यसि । अहो, अहं कार्यदर्शी ।

---

मानलोचन उर्वशीगतामुत्कण्ठां विनोदयतु भवान् ॥ **बहुकुसुमितास्विति ।** बहुकुसुमितास्वित्यनेनात्यन्तं सौगन्ध्यनिर्भरत्वं लोचनलोभनीयत्वं च व्यज्यते । उपवनेत्यनेनादूरवर्तितयानायासलभ्यत्वम् । नम्रविटपास्वित्यनेनातिघनतया प्रच्छायशीतलत्वं द्योत्यते । अपिशब्दो बह्वित्यादिनम्रेत्यन्तविशेषणान्तेषु योज्यः । तेन चैतादृशीष्वपि चक्षुषोऽननुरागे को हेतुः । तत्र हेतुगर्भं विशेषणमाह—**तदङ्गनेति ।** आलोकनमालोकस्तत्र तेन वा दुर्ललितं दुराग्रहग्रस्तम् । बहुकुसुमितास्वित्यादिभिर्विशेषणैरत्यन्तातिवत्वतीषु । 'अतिपरिचयादवज्ञा' इत्युक्तरीत्योपवनस्थित्या सर्वदासन्नवर्तित्वेनानादरविषयीभूतासु । नम्राः सौन्दर्यातिशयाद्विलोकनावनता विटपाः खिङ्गा यासु । नम्रान्विटान्पान्तीति वा । परपुरुषलोचनादिगोचरास्वित्यर्थः प्रासूचि । तदङ्गनेत्यनेन च सा प्रसिद्धा सौन्दर्यादिगुणगणशालिनी देवीभावाच्च निखिलमर्त्यदोषाभाववती याङ्गना तस्यां मनोऽभिरतम् । बहुदोषदूषितासु च लतासु चक्षुर्न सक्तमिति सांप्रतमेवैतदिति रहस्यम् । 'मम कुसुमिता–' इत्यपि पाठः । मम दृष्टिरिति संबन्धः । 'विटपः पल्लवे खिङ्गे' इति विश्वः ॥८॥ **विदूषकः ।** भोः, अहल्याकामुकस्येन्द्रस्य वज्रः सचिवः, उर्वशीपर्युत्सुकस्य भवतोऽप्यहम् । द्वावप्यत्रोन्मत्तौ ॥ **विदूषकः ।** एष चिन्तयामि । मा पुनः परिदेवितैः समाधिं भङ्क्ष्यसि ।

देहिं समाधिं भञ्जिस्ससि । (निमित्तं सूचयित्वा । आत्मगतम् ।) अहो, अहं कज्जदंसी ।

राजा—

असुलभा सकलेन्दुमुखी च सा
किमपि चेदमनङ्गविचेष्टितम् ।
अभिमुखीष्विव वाञ्छितसिद्धिषु
व्रजति निर्वृतिमेकपदे मनः ॥ ९ ॥

(इति मदनोत्सुकस्तिष्ठति ।)

(ततः प्रविशत्याकाशयानेनोर्वशी चित्रलेखा च ।)

चित्रलेखा—[1]सहि उव्वसि, कहिं क्खु अणिद्दिट्टकालणं गच्छीअदि ।

उर्वशी—(मदनवेदनामभिनीय सलज्जम् ।) [2]सहि, हेमऊडसिहरे लदाविडवान्दरे लग्गा वैजअन्तिआ मोआवेहि त्ति मए भणिदा उवहसिअ मं भणासि दिढं क्खु लग्गा ण सक्का मोआविदुम् । दाणिं पुच्छसि कहिं अणिद्दिट्टकालणं गच्छीअदि त्ति ।

चित्रलेखा—[3]किं णु तस्स राएसिणो पुरूरवस्स सआसं पत्थिदासि ।

१. सखि उर्वशि, कुत्र खल्वनिर्दिष्टकारणं गम्यते ।

२. सखि, हेमकूटशिखरे लताविटपान्तरे लग्ना वैजयन्तिका मोचयेति मया भणिता उपहस्य मां भणसि दृढं खलु लग्ना न शक्या मोचयितुम् । इदानीं पृच्छसि कुत्रानिर्दिष्टकारणं गम्यत इति ।

३. किं नु तस्य राजर्षेः पुरूरवसः सकाशं प्रस्थितासि ।

अहो, अहं कार्यदर्शी ॥ **असुलभेति** । निर्वृतिं संतोषम् । 'तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृतम् ।' इति हलायुधः ॥ ९ ॥ **चित्रलेखा** । सखि उर्वशि, कुत्र खल्वनिर्दिष्टकारणं गम्यते ॥ **उर्वशी** । सखि, हेमकूटशिखरे लताविटपान्तरे लग्ना वैजयन्तिका मोचयेति मया भणिता उपहस्य मां भणसि दृढं खलु लग्ना न शक्या मोचयितुम् । इदानीं पृच्छसि कुत्रानिर्दिष्टकारणं गम्यत इति । **चित्रलेखा** । किं नु तस्य राजर्षेः पुरूरवसः सकाशं प्रस्थितासि ॥ **उर्वशी** ।

**उर्वशी**—[1]एसो मे अवहत्थिदलज्जो व्ववसाओ ।

**चित्रलेखा**—[2]सहि, तधा वि संपधारीअदु दाव । को उण सहीए तहिं पढमं पेसिदो ।

**उर्वशी**—[3]णं हिअअम् ।

**चित्रलेखा**—[4]को णु तुमं णिओजेदि ।

**उर्वशी**—[5]मअणो क्खु मं णिओजेदि ।

**चित्रलेखा**—[6]अदो अवरं णत्थि मे वअणम् ।

**उर्वशी**—[7]तेण आदेसदु मे सही मग्गं जेण तहिं गच्छन्तीए ण अन्तराओ भवे ।

**चित्रलेखा**—[8]सहि, विस्सद्धा होहि । णं भअवदा देवगुरुणा

---

१. एष मेऽपहस्तितलज्जो व्यवसायः ।

२. सखि, तथापि संप्रधार्यतां तावत् । कः पुनः सख्या तत्र प्रथमं प्रेषितः ।

३. ननु हृदयम् ।

४. को नु त्वां नियोजयति ।

५. मदनः खलु मां नियोजयति ।

६. अतोऽपरं नास्ति मे वचनम् ।

७. तेन आदिशतु मे सखी मार्गं येन तत्र गच्छन्त्या नान्तरायो भवेत् ।

८. सखि, विस्रब्धा भव । ननु भगवता देवगुरुणा अपराजितां

---

एष मेऽपहस्तितलज्जो व्यवसायः । अपहस्तिता दूरीकृता ॥ **चित्रलेखा** । सखि, तथापि संप्रधार्यतां तावत् । कः पुनः सख्या तत्र प्रथमं प्रेषितः ॥ **उर्वशी** । ननु हृदयम् ॥ **चित्रलेखा** । को नु त्वां नियोजयति ॥ **उर्वशी** । मदनः खलु मां नियोजयति ॥ **चित्रलेखा** । अतोऽपरं नास्ति मे वचनम् ॥ **उर्वशी** । तेन आदिशतु मे सखी मार्गं येन तत्र गच्छन्त्या नान्तरायो भवेत् ॥ **चित्रलेखा** ।

अवराइदं णाम सिहावन्धणं विज्जं उवदिसन्तेण तिदसपडिवक्खस्स अलङ्घणीआ कद म्ह ।

**उर्वशी**—(सलज्जम् ।) [1]ताए पओअं सव्वं सुमरेसि ।

**चित्रलेखा**—[2]सहि, हिअअं एदं सव्वं जानादि ।

(उभे भ्रमणं रूपयतः ।)

**चित्रलेखा**—[3]सहि, पेक्ख पेक्ख । एदं भअवदीए भाईरहीए जमुणासङ्गपावणेसु सलिलेसु पुण्णेसु अवलोअन्तस्स विअ अत्ताणअं पइट्ठाणस्स सिहाभरणभूदं विअ तस्स राएसिणो भवणं उवगद म्ह ।

**उर्वशी**—(सस्पृहमवलोक्य ।) [4]णं वत्तव्वं ठाणान्तरगदो सग्गो त्ति (विचार्य ।) हला, कहिं क्खु सो आवण्णाणुकम्पी भवे ।

**चित्रलेखा**—[5]एदस्सिं णन्दणवणेक्कपदेसे विअ पमदवणे ओदरिअ जाणिस्सामो ।

(उभे अवतरतः ।)

---

नाम शिखाबन्धिनीं विद्यामुपदिशता त्रिदशप्रतिपक्षस्यालङ्घनीये कृते स्वः ।

१. तस्याः प्रयोगं सर्वं स्मरसि ।

२. सखि, हृदयमेतत्सर्वं जानाति ।

३. सखि, प्रेक्षस्व प्रेक्षस्व । एतद्भगवत्या भागीरथ्या यमुनासङ्गपावनेषु सलिलेषु पुण्येष्ववलोकयत इवात्मानं प्रतिष्ठानस्य शिखाभरणभूतमिव तस्य राजर्षेर्भवनमुपगते स्वः ।

४. ननु वक्तव्यं स्थानान्तरगतः स्वर्ग इति । सखि, कुत्र खलु स आपन्नानुकम्पी भवेत् ।

५. एतस्मिन्नन्दनवनैकप्रदेश इव प्रमदवनेऽवतीर्य ज्ञास्यामः ।

---

सखि, विस्रब्धा भव । ननु भगवता देवगुरुणापराजितां नाम शिखाबन्धिनी विद्यामुपदिशता त्रिदशप्रतिपक्षस्यालङ्घनीयेः कृतेः स्वः । देवगुरुणा गीष्पतिना । **उर्वशी** । तस्याः प्रयोगं सर्वं स्मरसि ॥ **चित्रलेखा** । सखि, हृदयमेतत्सर्वं जानाति ॥ **चित्रलेखा** । सखि, प्रेक्षस्व प्रेक्षस्व । एतद्भगवत्या भागीरथ्या यमुनासङ्गपावनेषु सलिलेषु पुण्येष्ववलोकयत इवात्मानं प्रतिष्ठानस्य शिखाभरणभूतमिव तस्य राजर्षेर्भवनमुपगते स्वः । प्रतिष्ठानस्य प्रयागपूर्वतीरस्थित 'झूसी'-संज्ञकनगरस्य ॥ **उर्वशी** । ननु वक्तव्यं स्थानान्तरगतः स्वर्ग इति । सखि, कुत्र खलु स आपन्नानुकम्पी भवेत् ॥ **चित्रलेखा** । एतस्मिन्नन्दनवनैकप्रदेश इव

**चित्रलेखा**—(राजानं दृष्ट्वा सहर्षम्।) [1]सहि, एसो पढमोदिदो विअ भअवं चन्दो कोमुदिं विअ अवेक्खदि तुमम्।

**उर्वशी**—(विलोक्य।) [2]हला, दाणिं पढमदंसणादो वि सविसेसं पिअदंसणो मे महाराओ पडिभादि।

**चित्रलेखा**—[3]जुज्जदि। ता एहि। उवसप्पम्ह।

**उर्वशी**—[4]ण दाव उवसप्पिस्सम्। तिरक्करिणीपडिच्छण्णा पास्सवत्तिणी भविअ सुणिस्सं दाव पासवत्तिणा वअस्सेण सह विअणे किं मन्तअन्तो चिट्ठदि त्ति।

**चित्रलेखा**—[5]जहा दे रोअदि।

(उभे यथोक्तमनुतिष्ठतः।)

**विदूषकः**—[6]भो, चिन्तिदो मए दुल्लहप्पणइजणस्स समागमोवाओ।

(राजा तूष्णीमास्ते।)

१. सखि, एष प्रथमोदित इव भगवांश्चन्द्रः कौमुदीमिवावेक्षते त्वाम्।

२. सखि, इदानीं प्रथमदर्शनादपि सविशेषं प्रियदर्शनो मे महाराजः प्रतिभाति।

३. युज्यते। तदेहि। उपसर्पावः।

४. न तावदुपसर्पिष्ये। तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वा श्रोष्ये तावत् पार्श्ववर्तिना वयस्येन सह विजने किं मन्त्रयंस्तिष्ठतीति।

५. यथा ते रोचते।

६. भोः, चिन्तितो मया दुर्लभप्रणयिजनस्य समागमोपायः।

प्रमदवनेऽवतीर्य ज्ञास्यामः॥ **चित्रलेखा**। सखि, एष प्रथमोदित इव भगवांश्चन्द्रः कौमुदीमिवावेक्षते त्वाम्॥ **उर्वशी**। सखि, इदानीं प्रथमदर्शनादपि सविशेषं प्रियदर्शनो मे महाराजः प्रतिभाति॥ **चित्रलेखा**। युज्यते। तदेहि। उपसर्पावः॥ **उर्वशी**। न तावदुपसर्पिष्ये। तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वा श्रोष्ये तावत् पार्श्ववर्तिना वयस्येन सह विजने किं मन्त्रयंस्तिष्ठतीति। तिरस्करिणी अन्तर्धानविद्या॥ **चित्रलेखा**। यथा ते रोचते॥ **विदूषकः**।

**उर्वशी**—[1]का उण धण्णा इत्थिआ जा इमिणा पडिमुग्गमाणा अत्ताणअं विणोदेदि।

**चित्रलेखा**—[2]झाणस्स किं विलम्बीअदि।

**उर्वशी**—[3]सहि, भीआमि सहसा पहावादो विण्णादुम्।

**विदूषकः**—[4]भो, णं भणामि चिन्तिदो मए दुल्लहपणइजणसमागमोवाओ।

**राजा**—वयस्य, कथ्यताम्।

**विदूषकः**—[5]सिविणसमागमआरिणं णिद्दं सेवदु भवम्। अहवा तत्तभोदीए उव्वसीए पडिकिदिं चित्तफलए अहिलिहिअ आलोअन्तो अत्ताणअं विणोदेहि।

१. का पुनर्धन्या स्त्री या अनेन परिमृग्यमाणात्मानं विनोदयति।

२. ध्यानाय किं विलम्ब्यते।

३. सखि, बिभेमि सहसा प्रभावतो विज्ञातुम्।

४. भोः, ननु भणामि चिन्तितो मया दुर्लभप्रणयिजनसमागमोपायः।

५. स्वप्नसमागमकारिणीं निद्रां सेवतां भवान्। अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिं चित्रफलकेऽभिलिख्यालोकयन्नात्मानं विनोदय।

---

भोः, चिन्तितो मया दुर्लभप्रणयिजनस्य समागमोपायः॥ **उर्वशी**। का पुनर्धन्या स्त्री या अनेन परिमृग्यमाणात्मानं विनोदयति। धन्या अत्युत्कटपुण्याद्यतिशयशालिनी, प्रलोभिका वा। 'रामा त्रिवर्गहेतुः स्त्री धन्या योषित्प्रलोभिका।' इति त्रिकाण्डीशेषः। परिमृग्यमाणा अन्विष्यमाणा॥ **चित्रलेखा**। ध्यानाय किं विलम्ब्यते॥ **उर्वशी**। सखि, बिभेमि सहसा प्रभावतो विज्ञातुम्। **विदूषकः**। भोः, ननु भणामि चिन्तितो मया दुर्लभप्रणयिजनसमागमोपायः॥ **विदूषकः**। स्वप्नसमागमकारिणीं निद्रां सेवतां भवान्। अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिं चित्रफलकेऽभिलिख्यालोकयन्नात्मानं विनोदय॥ **उर्व-**

**उर्वशी**—(सहर्षम् ।) [1]हीणसत्त हिअअ, समस्सस समस्सस ।

**राजा**—तदुभयमप्यनुपपन्नम् ।

हृदयमिषुभिः कामस्यान्तःसशल्यमिदं सदा
कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् ।
न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां
मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ १० ॥

**चित्रलेखा**—[2]सहि, सुदं तुए वअणम् ।

**उर्वशी**—[3]सुदम् । ण उण पज्जत्तं हिअअस्स ।

**विदूषकः**—[4]एत्तिओ मे मदिविहओ ।

**राजा**—(सनिःश्वासम् ।)

नितान्तकठिनां रुजं मम न वेद सा मानसीं
प्रभावविदितानुरागमवमन्यते वापि माम् ।
अलब्धफलनीरसं मम विधाय तस्मिञ्जने
समागममनोरथं भवतु पञ्चबाणः कृती ॥ ११ ॥

१. हीनसत्त्व हृदय, समाश्वसिहि समाश्वसिहि ।
२. सखि, श्रुतं त्वया वचनम् ।
३. श्रुतम् । न पुनः पर्याप्तं हृदयस्य ।
४. एतावान्मम मतिविभवः ।

**शी** । हीनसत्त्व हृदय, समाश्वसिहि समाश्वसिहि ॥ निद्रासेवनचित्रफलकयोरनुपपत्तिमेवाह—**हृदयमिति** । शोभनास्यां प्रियामुर्वशीमालेख्ये चित्रेऽप्यसमाप्य । संपूर्णमनालिख्येत्यर्थः । नेत्रयोरुद्गतबाष्पत्वं च न भविष्यतीति न, अपि तु भविष्यत्येव । नहि सव्यथान्तःकरणस्य निद्रागमनमश्रुसमावृतनेत्रस्य लिखनं वा क्वचिद्घटत इति भावः ॥ १० ॥ **चित्रलेखा** । सखि, श्रुतं त्वया वचनम् ॥ **उर्वशी** । श्रुतम् । न पुनः पर्याप्तं हृदयस्य ॥ **विदूषकः** । एतावान्मम मतिविभवः ॥ **नितान्तेति** । सा नितान्तमतिशयेन कठिनां दुःसहां मानसीं रुजं पीडां न वेद न जानाति । अन्यथावश्यं मां संभावयेदिति भावः । वेति पक्षान्तरे । प्रभावेन निजदैवशक्त्या ज्ञातानुरागमपि मामवमन्यतेऽवगणयति । कथं वा अमर्या मया मानुषे मनो निवेशनीयमित्याशयेनेति भावः । पञ्चबाणो मदनो मम मनोरथमभिलाषं तस्मिञ्जनेऽलब्धमप्राप्तं यत्फलं तेन नीरसं निःसारं विधाय

**चित्रलेखा**—सुदं तुए[1] ।

**उर्वशी**—हद्धी हद्धी । मं वि एव्वं अवगच्छदि । सहि, असमत्थह्मि अग्गदो भविअ अत्ताणअं दंसिदुम् । ता पहावणिम्मिदेण भुज्जवत्तेण लेहं संपादिअ अन्तरा खिविदुमिस्सामि[2] ।

**चित्रलेखा**—अणुमदं मे[3] ।

(उर्वशी नाट्येनाभिलिख्य क्षिपति ।)

**विदूषकः**—अविद अविद भो, किं णु एदम् । भुअङ्गणिम्मोओ किं मं खादिदुं णिवडिदो[4] ।

**राजा**—(दृष्ट्वा ।) नायं भुजंगनिर्मोकः । भूर्जपत्रगतोऽयमक्षरविन्यासः ।

**विदूषकः**—णं क्खु अदिट्ठाण उव्वसीए भवदो परिदेविअं[5]

---

१. श्रुतं त्वया ।

२. हा धिक् हा धिक् । मामप्येवमवगच्छति । सखि, असमर्थास्म्यग्रतो भूत्वात्मानं दर्शयितुम् । तत्प्रभावनिर्मितेन भूर्जपत्रेण लेखं संपाद्यान्तरा क्षेप्तुमिच्छामि ।

३. अनुमतं मे ।

४. अविदाविद भोः, किं न्वेतत् । भुजंगनिर्मोकः किं मां खादितुं निपतितः ।

५. ननु खल्वदृष्टया उर्वश्या भवतः परिदेवितं श्रुत्वा भूर्जपत्रेऽनुरागसूचकान्यक्षराण्यभिलिख्य विसर्जितानि भवेयुः ।

---

कृती कुशलो भवतु । 'अबद्धफलनीरसम्' इत्यपि पाठः । न बद्धं संपादितं फलं येन स चासौ नीरसश्च । फलाभावे तु मरणमेव वैरस्ये निदानम् । तेन च तस्य बाणपञ्चकाङ्गीकारः सफलः स्यादिति फलव्यक्तिः ॥ ११ ॥ **चित्रलेखा** । श्रुतं त्वया ॥ **उर्वशी** । हा धिक् हा धिक् । मामप्येवमवगच्छति । सखि, असमर्थास्म्यग्रतो भूत्वात्मानं दर्शयितुम् । तत्प्रभावनिर्मितेन भूर्जपत्रेण लेखं संपाद्यान्तरा क्षेप्तुमिच्छामि ॥ **चित्रलेखा** । अनुमतं मे ॥ **विदूषकः** । अविदेत्यदृष्टाश्रुतप्राप्तौ । किं न्वेतत् । भुजङ्गनिर्मोकः किं मां खादितुं निपतितः । 'समौ कञ्चुकनिर्मोकौ' इति त्रिकाण्डी ॥ **विदूषकः** । ननु खल्वदृष्टया उर्वश्या

सुणिअ भुज्जवत्ते अणुराअसूअआ अक्खरा अहिलिहिअ विसज्जिआइं भवे ।

**राजा**—नास्त्यगतिर्मनोरथानाम् । (गृहीत्वानुवाच्य च सहर्षम् ।) सखे, प्रसन्नस्ते तर्कः ।

**विदूषकः**—[1]जं एत्थ अहिलिहिदं तं सुणिदुं इस्सामि ।

**उर्वशी**—[2]साहु साहु । अज्ज, णाअरो सि ।

**राजा**—श्रूयताम् । (इति वाचयति ।)

[3]सामिअ संभावितआ जह अहं तुए अमुणिआ
तह अ अणुरत्तस्स सुहअ एअमेअ तुह ।
णवरि अ मे ललिअपारिआअसअणिज्जम्मि
होन्ति सुहा णन्दणवणवाआ वि सिहि व्व सरीरे ॥ १२ ॥

---

१. यदत्राभिलिखितं तच्छ्रोतुमिच्छामि ।

२. साधु साधु । आर्य, नागरोऽसि ।

३. स्वामिन् संभाविता यथाहं त्वयाज्ञात्री
तथा चानुरक्तस्य सुभग एवमेव तव ।
अनन्तरं च मे ललितपारिजातशयनीये
भवन्ति सुखा नन्दनवनवाता अपि शिखीव शरीरे ॥

भवतः परिदेवितं श्रुत्वा भूर्जपत्रेऽनुरागसूचकान्यक्षराण्यभिलिख्य विसर्जितानि भवेयुः । अत्र 'अक्खरा' इति पुंस्त्वम्, 'भवे' इत्यत्र बहुवचन एकवचनं च, 'प्राकृते लिङ्गवचनमतन्त्रम्' इति प्राकृतकृतसमयतो बोद्धव्यम् । यद्वा विसर्जिता भवेत्पत्रिकेति शेषः । नन्विति संबोधने । खल्विति वितर्के निश्चये वा । 'सुणिअ' इत्यत्र 'मुणिअ' इत्यपि पाठः । मुणिअ ज्ञात्वेत्यर्थः ॥ अगतिरविषयः ॥ **विदूषकः** । यदत्राभिलिखितं तच्छ्रोतुमिच्छामि ॥ **उर्वशी** । साधु साधु । आर्य, नागरोऽसि ॥ **सामिएति** । स्वामिन्, संभाविता यथाहं त्वयाज्ञात्री तथा चानुरक्तस्य सुभग एवमेव तव । अनन्तरं च मे ललितपारिजातशयनीये भवन्ति सुखा नन्दनवनवाता अपि शिखीव शरीरे ॥ स्वामिन्, यथाहं त्वया नितान्तकठिनामित्यादिना अज्ञात्री निजपीडामजानाना संभाविता, तथा च हे सुभग, अनुरक्तस्य तवैव मे यथा त्वया संभावितं तथैव त्वदनुरागाज्ञानवत्येवास्मि ।

**उर्वशी**—किं[1] णु संपदं भणिस्सदि ।

**चित्रलेखा**—किं[2] णु । भणिदं एव्व एदेण मलाणकमलणालोवमेहिं अङ्गेहिं ।

**विदूषकः**—दिट्ठिआ[3] मए क्खु बुभुक्खिदेण सोत्थिवाअणिअं विअ लद्धं भवदो समस्सासणकारणम् ।

**राजा**—समाश्वासनमिति किमुच्यते ।

तुल्यानुरागपिशुनं ललितार्थबन्धं
पत्रे निवेशितमुदाहरणं प्रियायाः ।
उत्पक्ष्मलं मम सखे मदिरेक्षणाया-
स्तस्याः समागतमिवाननमाननेन ॥ १३ ॥

**उर्वशी**—एॅत्थ[4] णो समभाआ मदी ।

१. किं नु सांप्रतं भणिष्यति ।

२. किं नु । भणितमेवैतेन म्लानकमलनालोपमैरङ्गैः ।

३. दिष्ट्या मया खलु बुभुक्षितेन स्वस्तिवाचनिकमिव लब्धं भवतः समाश्वासनकारणम् ।

४. अत्रावयोः समभागा मतिः ।

---

अन्यथा तदैव मयागतं स्यादित्यर्थः । 'तथैव' इति पाठे 'तथैव' 'एवमेव' इत्येकार्थकमपि पदद्वयमादरातिशयद्योतनार्थम् । तथा च यत्त्वया संभावितं तत्तथैव तथेवेत्यर्थः । अनन्तरं च तवैतादृगवस्थाज्ञानोत्तरं तु मे ललितं शीतलतादिनातिरमणीयं पारिजातस्येमानि कुसुमपल्लवानि तदीयं यच्छयनीयं तस्मिन्सुखाः सुखरूपा अपि नन्दनवनवाताः शरीरे शिखीव अग्निसमा भवन्ति । णवरिणवरीं केवलानन्तर्ययोर्निपातितौ ॥ १२ ॥ **उर्वशी** । कि नु सांप्रतं भणिष्यति ॥ **चित्रलेखा** । कि नु । भणितमेवैतेन म्लानकमलनालोपमैरङ्गैः ॥ **विदूषकः** । दिष्ट्या मया खलु बुभुक्षितेन स्वस्तिवाचनिकमिव लब्धं भवतः समाश्वासनकारणम् ॥ **तुल्येति** । तुल्यानुरागस्य पिशुनं सूचकम् । 'पिशुनौ खलसूचकौ' इति त्रिकाण्डी । ललितोऽर्थस्य बन्धो यत्र । ललितावर्थबन्धौ अभिधेयरचनाविशेषौ यत्रेति वा । 'ललितोपबन्धम्' इति पाठे ललित उपबन्धो रचनाविशेषो यत्रेत्यर्थः । उदाहरणमुक्तिः । पत्रे तदुक्तिमात्रनिवेशनमात्रेणैव ममाननं तस्या आननेन समागतं मिलितमिवेत्युत्प्रेक्षा ॥ १३ ॥ **उर्वशी** । अत्रावयोः समभागा

**राजा**—वयस्य, अङ्गुलीस्वेदेन मे लुप्यन्तेऽक्षराणि । धार्यतामयं स्वहस्ते निक्षेपः प्रियायाः ।

**विदूषकः**—(गृहीत्वा ।) [1]तदो किं तत्तभोदी उव्वसी भवदो मणोरहतरुकुसुमं दंसिअ फले विसंवदिस्सदि ।

**उर्वशी**—[2]हला, जाव उवत्थाणकादरं अत्ताणअं समवत्थावेमि, ताव तुमं अत्ताणअं दंसिअ जं मे अणुमदं तं भणाहि ।

**चित्रलेखा**—[3]तहा । (इति तिरस्करिणीमपनीय राजानमुपसृत्य ।) जेदु जेदु महाराओ ।

**राजा**—(संभ्रमादरगर्भम् ।) स्वागतं भवत्यै । (पार्श्वमवलोक्य ।) भद्रे,

न तथा नन्दयसि मां सख्या विरहिता तया ।
संगमे दृष्टपूर्वेव यमुना गङ्गया यथा ॥ १४ ॥

**चित्रलेखा**—[4]णं पढमं मेहराई दीसदि, पच्छा विज्जुल्लदा ।

**विदूषकः**—(अपवार्य ।) [5]कहं ण एसा उव्वसी उवगदा । तत्तभोदीए उव्वसीए सहअरीए एदाय होदव्वम् ।

१. ततः किं तत्रभवत्युर्वशी भवतो मनोरथतरुकुसुमं दर्शयित्वा फले विसंवदिष्यति ।

२. सखि, यावदुपस्थानकातरमात्मानं समवस्थापयामि, तावत्त्वमात्मानं दर्शयित्वा यन्मेऽनुमतं तद्भण ।

३. तथा । जयतु जयतु महाराजः ।

४. ननु प्रथमं मेघराजिर्दृश्यते, पश्चाद्विद्युल्लता ।

५. कथं नैषोर्वश्युपगता । तत्रभवत्या उर्वश्याः सहचर्यैतया भवितव्यम् ।

मतिः ॥ **विदूषकः** । ततः किं तत्रभवत्युर्वशी भवतो मनोरथतरुकुसुमं दर्शयित्वा फले विसंवदिष्यति ॥ **उर्वशी** । सखि, यावदुपस्थानकातरमात्मानं समवस्थापयामि, तावत्त्वमात्मानं दर्शयित्वा यन्मेऽनुमतं तद्भण ॥ **चित्रलेखा** । तथा । जयतु जयतु महाराजः ॥ **न तथेति** । नन्दयसि संतोषयसि । पूर्वं दृष्टा दृष्टपूर्वा ॥ १४ ॥ **चित्रलेखा** । ननु प्रथमं मेघराजिर्दृश्यते, पश्चाद्विद्युल्लता । **विदूषकः** । अपवार्य । परावृत्यान्यं प्रति रहस्यकथनमपवारितम् । लक्षणं

**राजा**—एतदासनमास्यताम् ।

**चित्रलेखा**—[1]उव्वसी महाराअं सिरसा पणमिअ विण्णवेदि ।

**राजा**—किमाज्ञापयति ।

**चित्रलेखा**—[2]मम तस्सिं सुरारिसंभवे दुण्णए महाराओ एव्व सरणं आसी । संपदं सा अहं तुह दंसणसमुत्थेण आआसिणा बलिअं बाधिअमाणा मअणेण पुणो वि महाराअस्स अणुकम्पणीआ होमि ।

**राजा**—अयि सखि,

पर्युत्सुकां कथमसि प्रियदर्शनां ता-
मार्तिं न पश्यसि पुरूरवसस्तदर्थाम् ।
साधारणोऽयमुभयोः प्रणयो यतस्व
तां कौमुदीमिव समागमयेन्दुबिम्बे ॥ १५ ॥

---

१. उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति ।

२. मम तस्मिन्सुरारिसंभवे दुर्नये महाराज एव शरणमासीत् । सांप्रतं साहं तव दर्शनसमुत्थेनायासिना बलवद्बाध्यमाना मदनेन पुनरपि महाराजस्यानुकम्पनीया भवामि ।

---

त्वाह विश्वनाथकविराजः—'तद्भवेदपवारितम् । रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ।' इति । कथं नैषोर्वश्युपगता । तत्रभवत्या उर्वश्याः सहचर्यैतया भवितव्यम् ॥ **चित्रलेखा** । उर्वशी महाराजं शिरसा प्रणम्य विज्ञापयति ॥ **चित्रलेखा** । मम तस्मिन्सुरारिसंभवे दुर्नये महाराज एव शरणमासीत् । सांप्रतं साहं तव दर्शनसमुत्थेनायासिना बलवद्बाध्यमाना मदनेन पुनरपि महाराजस्यानुकम्पनीया भवामि ॥ **पर्युत्सुकामिति** । आर्तिं पीडाम् । अयमुभयोरावयोः प्रणयः स्नेहः साधारणः । यथा मम तस्याम्, तथा तस्या अपि मयीत्यर्थः । अतो यतस्व यत्नं कुरुष्व । कौमुदीं ज्योत्स्नामिन्दुबिम्ब इव ताम् । मयीत्यर्थात् । समागमय । 'प्रणयः स्मरस्य तप्तेन तप्तमयसा घटनाय योग्यम्' इति पाठे स्मरस्य प्रणयः सोत्कण्ठभापितेन पीडाप्रदानरूपः । अत इत्यर्थात् । तप्तेनायसा घटनाय तप्तमेव योग्यमिति लोकोक्तिः । अतो झटिति मिलनप्रयत्नो विधेय इति भावः ॥ १५ ॥

**चित्रलेखा**—(उर्वशीमुपेत्य ।) हला, इदो एहि । णिभुअदरं भीसणं मअणं पेक्खिअ पिअदमस्स दे दूदिम्हि संवुत्ता ।

**उर्वशी**—(तिरस्करिणीमपनीय ।) अयि अणवत्थिदे, लहु एव्व तुए परिच्चत्तम्हि ।

**चित्रलेखा**—(सस्मितम् ।) एदस्सिं मुहुत्ते जाणिस्सामो को कं तजिस्सदि त्ति । आआरं दाव पडिवज्ज ।

**उर्वशी**—(ससाध्वसमुपसृत्य सव्रीडम् ।) जेदु जेदु महाराओ ।

**राजा**—(सहर्षम् ।) सुन्दरि,

मया नाम जितं यस्य त्वयायं समुदीर्यते ।
जयशब्दः सहस्राक्षादागतः पुरुषान्तरम् ॥ १६ ॥

(हस्ते गृहीत्वा आसन उपवेशयति ।)

---

१. सखि, इत एहि । निभृततरं भीषणं मदनं प्रेक्ष्य प्रियतमस्य ते दूत्यस्मि संवृत्ता ।

२. अयि अनवस्थिते, लघ्वेव त्वया परित्यक्तास्मि ।

३. एतस्मिन्मुहूर्ते ज्ञास्यामः कः कं त्यक्ष्यतीति । आकारं तावत्प्रतिपद्यस्व ।

४. जयतु जयतु महाराजः ।

---

**चित्रलेखा** । सखि, इत एहि । निभृततरं भीषणं मदनं प्रेक्ष्य प्रियतमस्य ते दूत्यस्मि संवृत्ता । 'युष्मत्तोऽपि निर्दयतरं मदनं प्रेक्ष्य वयस्यस्य ते दूती संवृत्ता' इति क्वचित्पाठः ॥ **उर्वशी** । अयि अनवस्थिते, लघ्वेव त्वया परित्यक्तास्मि ॥ **चित्रलेखा** । एतस्मिन्मुहूर्ते ज्ञास्यामः कः कं त्यक्ष्यतीति । आकारं तावत्प्रतिपद्यस्व ॥ **उर्वशी** । ससाध्वसं सभयम् । राज्ञस्तेजोतिशयादित्यर्थः । सव्रीडं सलज्जम् । जयतु जयतु महाराजः ॥ **मया नामेति** । जितं सर्वोत्कर्षशालिना जातम् । जयशब्द उत्कर्षसूचकः शब्दः । सहस्राक्षादिन्द्रात् पूर्वं लब्धोऽयं शब्दस्तस्मिन्नेवासीत् । इदानीं मल्लक्षणे पुरुषान्तरेऽपि जात इत्यर्थः । अत्र च 'उर्वशी—जयतु' इत्यारभ्य 'आगतः पुरुषान्तरम्' इत्यन्तमुत्तरोत्तरं वाक्ययोजनं प्रगमनाख्यं प्रतिमुखं संध्यङ्गमिदम् । 'प्रगमनं वाक्यं स्यादुत्तरोत्तरम्' इति

**विदूषकः**—[1]कीदिसी त्थिदी भोदीए रज्जे । पिअवअस्सो बह्मणो ण वन्दीअदि ।

(उर्वशी सस्मितं प्रणमति ।)

**विदूषकः**—[2]सोत्थि भोदीए ।

**देवदूतः**—चित्रलेखे, त्वरयोर्वशीम् ।

मुनिना भरतेन यः प्रयोगो
भवतीष्वष्टरसाश्रयो निबद्धः ।
ललिताभिनयं तमद्य भर्ता
मरुतां द्रष्टुमनाः सलोकपालः ॥ १७ ॥

(सर्वे आकर्णयन्ति । उर्वशी विषादं रूपयति ।)

**चित्रलेखा**—[3]सुदं तुए देवदूअस्स वअणम् । ता अणुजाणाहि महाराअम् ।

**उर्वशी**—(निःश्वस्य ।) [4]णत्थि मे वाआविहओ ।

1. कीदृशी स्थितिर्भवदीये राज्ये । प्रियवयस्यो ब्राह्मणो न वन्द्यते ।

2. स्वस्ति भवत्यै ।

3. श्रुतं त्वया देवदूतस्य वचनम् । तदनुजानीहि महाराजम् ।

4. नास्ति मे वाग्विभवः ।

विश्वनाथकविराजोक्ततल्लक्षणात् ॥ १६ ॥ **विदूषकः** । कीदृशी स्थितिर्भवदीये राज्ये । प्रियवयस्यो ब्राह्मणो न वन्द्यते । **विदूषकः** । स्वस्ति भवत्यै । 'नमःस्वस्ति–' इत्यादिना चतुर्थी । 'नेपथ्ये' इत्यत आरभ्योर्वश्याकाररूपार्थोपक्षेपश्चूलिकया विहितः । चूलिकालक्षणमुक्तं प्राक् ॥ **मुनिनेति** । प्रयुज्यत इति प्रयोगो लक्ष्मीस्वयंवराभिधानं रूपकम् । शृङ्गाराद्यष्टरसाश्रयः । निबद्धो रचितः । ललितोऽतिसुन्दरोऽभिनयोऽर्थव्यञ्जनं यत्र । मरुतां देवानाम् ॥ १७ ॥ **चित्रलेखा** । श्रुतं त्वया देवदूतस्य वचनम् । तदनुजानीहि महाराजम् । अनुजानीहि आपृच्छस्व । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः ॥ **उर्वशी** । नास्ति मे वाग्विभवः

**चित्रलेखा**—[1]महाराअ, उव्वसी विण्णवेदि—परवसो अअं जणो। महाराएण अब्भणुण्णादा इच्छामि देअदेअस्स अणवरद्धं अत्ताणअं कादुम्।

**राजा**—(कथंकथमपि वचनं संस्थाप्य।) नास्मि भवत्योरीश्वरनियोगपरिपन्थी। किं तु स्मर्तव्यस्त्वयं जनः।

(उर्वशी वियोगदुःखं रूपयित्वा राजानं पश्यन्ती सह सख्या निष्क्रान्ता।)

**राजा**—(सनिःश्वासम्।) वैयर्थ्यमिव चक्षुषः संप्रति।

**विदूषकः**—(पत्रं दर्शयितुकामः।) [2]णं भुज्ज—(इत्यर्धोक्तेनात्मगतम्।) अविद अविद भो, उव्वसीदंसणविम्हिदेण मए तं भुज्जवत्तं पब्भट्टं वि हत्तादो ण विण्णादम्।

**राजा**—किमसि वक्तुकामः।

**विदूषकः**—[3]वअस्स, एदम्हि वत्तुकामो। मा भवं अङ्गाइं विमुञ्चदु। दिढं क्खु तुइ बद्धभावा उव्वसी। ण सा इदो गदुअ एदं अणुबन्धं सिढिलीकरेदि।

---

१. महाराज, उर्वशी विज्ञापयति—परवशोऽयं जनः। महाराजेनाभ्यनुज्ञाता इच्छामि देवदेवस्यानपराद्धमात्मानं कर्तुम्।

२. ननु भूर्ज—। हा धिक् हा धिक् भोः, उर्वशीदर्शनविस्मितेन मया तद्भूर्जपत्रं प्रभ्रष्टमपि हस्तान्न विज्ञातम्।

३. वयस्य, एतदस्मि वक्तुकामः। मा भवानङ्गानि विमुञ्चतु। दृढं खलु त्वयि बद्धभावा उर्वशी। न सा इतो गत्वा एनमनुबन्धं शिथिलीकरोति।

**चित्रलेखा**। महाराज, उर्वशी विज्ञापयति—परवशोऽयं जनः। महाराजेनाभ्यनुज्ञाता इच्छामि देवदेवस्यानपराद्धमात्मानं कर्तुम्॥ संस्थाप्य स्थिरीकृत्य। ईश्वरनियोगपरिपन्थी प्रभ्वाज्ञाविरोधी॥ **विदूषकः**। 'ननु भूर्ज–' इत्यर्धोक्तेन। 'अविद' इत्यदृष्टाश्रुतप्राप्तौ। 'हद्धी' इत्यपि पाठः। हा धिक् हा धिक् भोः, उर्वशीदर्शनविस्मितेन मया तद्भूर्जपत्रं प्रभ्रष्टमपि हस्तान्न विज्ञातम्॥ **विदूषकः**। वयस्य, एतदस्मि वक्तुकामः। मा भवानङ्गानि विमुञ्चतु। दृढं खलु त्वयि बद्धभावा

**राजा**—ममाप्येतदेव मनसि वर्तते । तया खलु प्रस्थाने

अनीशया शरीरस्य हृदयं स्ववशं मयि ।
स्तनकम्पक्रियालक्ष्यैर्न्यस्तं निःश्वसितैरिव ॥ १८ ॥

**विदूषकः**—(स्वगतम् ।) वेवंदि मे हिअअं केत्तिए वेलाए तस्स भुज्जवत्तस्स अत्तभवदा वअस्सेण णामं गेण्हिदव्वं त्ति ।

**राजा**—वयस्य, केनेदानीमुन्मनसमात्मानं विनोदयामि । (स्मृत्वा ।) उपनय भूर्जपत्रम् ।

**विदूषकः**—(सर्वतो दृष्ट्वा सविषादम् ।) हा कहं ण दिस्सदि । भो, दिव्वं क्खु तं भुज्जवत्तं गदं उव्वसीमग्गेण ।

**राजा**—(सासूयम् ।) सर्वत्र प्रमादी वैधेयः ।

**विदूषकः**—णं विचिणु । (उत्थाय ।) इदो भवे । एत्थ वा भवे । (इति विचेतव्यं नाटयति ।)

(ततः प्रविशत्यौशीनरी चेटी च विभवतश्च परिवारः ।)

**औशीनरी**—हञ्जे णिउणिए, सच्चं किं लदाघरं विसन्तो अज्जमाणवअसहाओ दिट्ठो तुए महाराओ ।

---

१. वेपते मे हृदयं कस्यां वेलायां तस्य भूर्जपत्रस्यात्रभवता वयस्येन नाम ग्राह्यमिति ।

२. हा कथं न दृश्यते । भोः, दिव्यं खलु तद्भूर्जपत्रं गतमुर्वशीमार्गेण ।

३. ननु विचिनुहि । इतो भवेत् । अत्र वा भवेत् ।

४. हञ्जे निपुणिके, सत्यं किं लतागृहं विशन्नार्यमाणवकसहायो दृष्टस्त्वया महाराजः ।

---

उर्वशी । न सा इतो गत्वा एनमनुबन्धं शिथिलीकरोति ॥ **अनीशयेति** । शरीरस्यानीशया । इन्द्राधीनत्वादित्यर्थः । स्ववशं निजायत्तम् ॥ १८ ॥ **विदूषकः** । वेपते मे हृदयं कस्यां वेलायां तस्य भूर्जपत्रस्यात्रभवता वयस्येन नाम ग्राह्यमिति ॥ **राजा** । उन्मनसमुत्कण्ठितम् ॥ **विदूषकः** । हा कथं न दृश्यते । भोः, दिव्यं खलु तद्भूर्जपत्रं गतमुर्वशीमार्गेण ॥ सासूयं सक्रोधम् । प्रमादी असावधानः । 'प्रमादोऽनवधानता' इति त्रिकाण्डी । वैधेयो मूर्खः । 'मूर्खवैधेयवालिशाः' इति सैव ॥ **विदूषकः** । ननु विचिनुहि ॥ **विदूषकः** । इतो भवेत् । अत्र वा भवेत् ॥ औशीनरी काशिराजपुत्री ॥ **औशीनरी** । हञ्जे इति चेटी

**चेटी**—[1]अलीअं किं मए भट्टिणी विण्णविदपुव्वा ।

**देवी**—[2]तेण हि लदाविडवन्तरिदा सुणिस्सं दाव वीसम्भमन्तिदाइं जं तुए कहिदं सच्चं ण वेत्ति ।

**चेटी**—[3]जं देवीए रुच्चदि ।

**देवी**—(परिक्रम्य पुरस्तादवलोक्य च ।) [4]णिउणिए, किं णु एदं वत्तं णवचीअरं विअ इदो दक्खिणमारुदेण आणीअदि ।

**चेटी**—(विभाव्य ।) [5]भट्टिणि, पडिवत्तणविभाविदक्खरं भुज्जवत्तं क्खु एदम् । हन्त, कहं देवीए एव्व णेउरकोडिलग्गम् । (गृहीत्वा) कहं वाचीअदु एदम् ।

**देवी**—[6]अवलोएहि दाव एदम् । जदि अविरुद्धं तदो सुणिस्सम् ।

---

१. अलीकं किं मया भट्टिनी विज्ञापितपूर्वा ।

२. तेन हि लताविटपान्तरिता श्रोष्ये तावद्विश्रम्भमन्त्रितानि यत्त्वया कथितं सत्यं न वेति ।

३. यद्देव्या रोचते ।

४. निपुणिके, किं न्वेतत्पत्रं नवचीवरमिवेतो दक्षिणमारुतेनानीयते ।

५. भट्टिनि, परिवर्तनविभाविताक्षरं भूर्जपत्रं खल्वेतत् । हन्त, कथं देव्या एव नूपुरकोटिलग्नम् । कथं वाच्यतामेतत् ।

६. अवलोकय तावदेतत् । यदि अविरुद्धं तदा श्रोष्ये ।

---

प्रत्यामन्त्रणम् । निपुणिके, सत्यं किं लतागृहं विशन्नार्यमाणवकसहायो दृष्टस्त्वया महाराजः ॥ **चेटी** । अलीकं किं मया भट्टिनी विज्ञापितपूर्वा । भट्टिनी राजमहिषी ॥ **देवी** । तेन हि लताविटपान्तरिता श्रोष्ये तावद्विश्रम्भमन्त्रितानि यत्त्वया कथितं सत्यं न वेति ॥ **चेटी** । यद्देव्या रोचते ॥ **देवी** । निपुणिके, किं न्वेतत्पत्रं नवचीवरमिवेतो दक्षिणमारुतेनानीयते । 'पत्तं' इति पदरहितो वा पाठः ॥ **चेटी** । भट्टिनि, परिवर्तनविभाविताक्षरं भूर्जपत्रं खल्वेतत् । हन्त, कथं देव्या एव नूपुरकोटिलग्नम् । कथं वाच्यतामेतत् । **देवी** । अवलोकय ताव-

**चेटी**—(तथा कृत्वा ।) [१]भट्टिणि, तं एदं कोलीणं विअम्भदि । भट्टारअं उद्दिसिअ उव्वसीअक्खरो कव्वबन्धो त्ति तक्केमि । अज्जमाणवअप्पमादादो अम्हाणं हत्थं आगदम् ।

**देवी**—[२]णं गिहीदत्था होहि ।

(चेटी वाचयति ।)

**देवी**—[३]एदेण एव्व उवआरेण तं अच्छराकामुअं पेक्खम्ह ।

**चेटी**—[४]जं देवी आणवेदि ।

(इति परिजनसहिते लतागृहं परिक्रामतः ।)

**विदूषकः**—[५]भो वअस्स, किं एदं पवणवसगामि पमदवणसमीवगदक्कीडापव्वदपज्जन्ते दीसदि ।

**राजा**—(उत्थाय ।) भगवन् वसन्तसख मलयानिल,

वासार्थं हर संभृतं सुरभि यत्पौष्पं रजो वीरुधां
किं मिथ्या भवतो हृतेन दयितास्नेहस्वहस्तेन मे ।

१. देवि, तदेतत्कौलीनं विजृम्भते । भट्टारकमुद्दिश्य उर्वश्यक्षरः काव्यबन्ध इति तर्कयामि । आर्यमाणवकप्रमादादावयोर्हस्तमागतम् ।

२. ननु गृहीतार्था भव ।

३. एतेनैवोपका(चा)रेण तमप्सरःकामुकं प्रेक्षावहे ।

४. यद्देव्याज्ञापयति ।

५. भो वयस्य, किमेतत्पवनवशगामि प्रमदवनसमीपगतक्रीडापर्वतपर्यन्ते दृश्यते ।

देतत् । यदि अविरुद्धं तदा श्रोष्ये ॥ **चेटी** । देवी, तदेतत्कौलीनं विजृम्भते । 'स्यात्कौलीनं लोकवादः' इति त्रिकाण्डी । भट्टारकमुद्दिश्य उर्वश्यक्षरः काव्यबन्ध इति तर्कयामि । 'राजा भट्टारको देवः' इत्यमरः । आर्यमाणवकप्रमादादस्माकं हस्तमागतम् ॥ **देवी** । ननु गृहीतार्था भव ॥ **देवी** । एतेनैवोपकारेण, उपचारेण वा, तमप्सरःकामुकं प्रेक्षावहे ॥ **चेटी** । यद्देव्याज्ञापयति ॥ **विदूषकः** । भो वयस्य, किमेतत्पवनवशगामि प्रमदवनसमीपगतक्रीडापर्वतपर्यन्ते दृश्यते ॥ **वासार्थमिति** । सु-

जानीते हि भवान्विनोदनशतैरेवंविधैर्धारितं
कामार्तं जनमञ्जसाभिभवितुं नालम्बितप्रार्थनम् ॥ १९ ॥

**निपुणिका**—[1]भट्टिणि, एदस्स एव्व अण्णेसणं वट्टदि।

**देवी**—[2]पेक्खामि।

**विदूषकः**—[3]भो, मिलाअमाणकेसरच्छविणा मोरपिच्छेण विप्पलद्धोह्मि।

**राजा**—सर्वथा हतोऽस्मि मन्दभाग्यः।

**देवी**—(सहसोपसृत्य।) [4]अज्जउत्त, अलं आवेगेण। एदं एव्व तं भुज्जवत्तम्।

**राजा**—(ससंभ्रममात्मगतम्।) अये, इयं देवी। (प्रकाशम्।) स्वागतं देव्यै।

१. भट्टिनि, एतस्यैवान्वेषणं वर्तते।

२. प्रेक्षे।

३. भोः, म्लायमानकेसरच्छविना मायूरपिच्छेन विप्रलब्धोऽस्मि।

४. आर्यपुत्र, अलमावेगेन। एतदेव तद्भूर्जपत्रम्।

रभि सुगन्धि यत्पौष्पं पुष्पसंबन्धि संभृतं धृतं संचितं वा वीरुधां लतानां रजः परागं वासार्थं सौगन्ध्यार्थं हर नय। मिथ्याहृतेन निरर्थकं नीतेन मे मम दयितायाः प्रियायाः स्नेहस्वहस्तेन स्नेहसूचको यः स्वहस्तो लक्षणया स्वहस्तलेखस्तेन भवतस्तव किम्। किं प्रयोजनमित्यर्थः। वीरुत्पुष्परजोहरणे हि ते सौगन्ध्यलाभोऽपि भविष्यति। लेखहरणे तु ते न केवलं न लाभः प्रत्युत मादृग्विधवधाधर्मोऽपि प्रसज्येतेति न त्वयैतादृशं विधेयमिति भावः। हि यतः भवानेवंविधैर्विनोदनशतैर्हस्तलेखचित्रफलकादिभिर्धारितं विहितजीवनम्। आलम्बिता अङ्गीकृता प्रार्थना येन तं कामार्तं जनमञ्जसा तत्त्वतोऽभिभवितुं पराभवितुं न जानीते। अभिभवितुं न जानीते इदमञ्जसा सत्यमिति वा। अतश्चावश्यं लेखो न नेय इति भावः। निजदाक्षिण्यरक्षणायापि नैतादृग्विधेयमिति रहस्यम्। 'अञ्जसा तत्त्वतूर्णयोः' इति विश्वः॥ १९॥ **निपुणिका**। भट्टिनि, एतस्यैवान्वेषणं वर्तते॥ **देवी**। प्रेक्षे॥ **विदूषकः**। भोः, म्लायमानकेसरच्छविना मयूरपिच्छेन विप्रलब्धोऽस्मि॥ **देवी**। आर्यपुत्र, अलमावेगेन। एतदेव तद्भूर्जपत्रम्। 'आर्यपुत्र' इति पतिं प्रति पत्न्याः संबुद्धिः। 'ऊढायां देवि दयिते पुमानाह प्रियां प्रति। आर्यपुत्र

**देवी**—[1]दुरागदं दाणिं संवुत्तम् ।

**राजा**—(जनान्तिकम् ।) वयस्य, किमत्र प्रतिविधानम् ।

**विदूषकः**—(जनान्तिकम् ।) लोत्तेणं[2] सूइदस्स कुम्भिलअस्स अत्थि वा पडिवअणम् ।

**राजा**—(अपवार्य ।) मूढ, नायं परिहासकालः । (प्रकाशम् ।) नेदं पत्रं मया मृग्यते । तत्खलु मन्त्रपत्रं यदन्वेषणाय ममायमारम्भः ।

**देवी**—[3]जुज्जदि अत्तणो सोहग्गं पच्छादेदुम् ।

**विदूषकः**—[4]भोदि, तुवरेहि से भोअणम् । पित्तोवसमणेन सुत्थो होदु ।

**देवी**—णिउणिए[5], सोहणं खु बह्मणेण आसासिदो वअस्सो ।

**विदूषकः**—[6]णं पेक्ख । आसासिदो वअस्सो चित्तभोअणेण ।

**राजा**—मूर्ख, बलादपराधिनं मामापादयसि ।

१. दुरागतमिदानीं संवृत्तम् ।
२. लोप्त्रेण सूचितस्य कुम्भीरकस्यास्ति वा प्रतिवचनम् ।
३. युज्यत आत्मनः सौभाग्यं प्रच्छादयितुम् ।
४. भवति, त्वरयस्वास्य भोजनम् । पित्तोपशमनेन स्वस्थो भवतु ।
५. निपुणिके, शोभनं खलु ब्राह्मणेनाश्वासितो वयस्यः ।
६. ननु प्रेक्षस्व । आश्वासितो वयस्यश्चित्रभोजनेन ।

---

च जीवेश नाथ साप्याह वल्लभम् ॥' इति सागरोक्तेः ॥ **देवी** । दुरागतमिदानीं संवृत्तम् ॥ प्रतिविधानं प्रतीकारः ॥ **विदूषकः** । लोप्त्रेण सूचितस्य कुम्भीरकस्यास्ति वा प्रतिवचनम् । लोप्त्रं चोरितद्रव्यांशभूतं वस्तु । 'दासी' इति भाषायां प्रसिद्धम् । 'स्तेयं लोप्त्रं च तद्धनम्' इति त्रिकाण्डी । कुम्भीरकश्चोरः । 'कुम्भीरको गण्डपदस्तस्करश्च मलिम्लुचः ।' इति कोषः ॥ मृग्यतेऽन्विष्यते । आरम्भ उद्योगः ॥ **देवी** । युज्यत आत्मनः सौभाग्यं प्रच्छादयितुम् ॥ **विदूषकः** । भवति, त्वरयस्वास्य भोजनम् । पित्तोपशमनेन स्वस्थो भवतु ॥ **देवी** । निपुणिके, शोभनं खलु ब्राह्मणेनाश्वासितो वयस्यः । वयस्यः सखा ॥ **विदूषकः** । ननु प्रेक्षस्व ।

**देवी**—[1]णत्थि भवदो अवराहो । अहं एव्व अवराद्धा । जा पडिऊलदंसणा भविअ अग्गदो चिट्ठामि । इदो गमिस्सम् । (इति कोपं नाटयित्वा प्रस्थिता ।)

**राजा**—

अपराधी नामाहं प्रसीद रम्भोरु विरम संरम्भात् ।
सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः ॥ २० ॥

( इति पादयोः पतति ।)

**देवी**—(आत्मगतम् ।) [2]मा खु लहुहिअआ अणुणअं बहु मण्णे । किं दु दक्खिणणकिदपच्छादावस्स भाएमि । (इति राजानमपहाय सपरिवारा निष्क्रान्ता ।)

**विदूषकः**—[3]पाउसणदी विअ अप्पसण्णा गदा देवी । णं उट्ठेहि ।

**राजा**—(उत्थाय ।) वयस्य, नेदमुपपन्नम् । पश्य ।

प्रियवचनकृतोऽपि योषितां
दयितजनानुनयो रसादृते ।

१. नास्ति भवतोऽपराधः । अहमेवापराद्धा । या प्रतिकूलदर्शना भूत्वा अग्रतस्तिष्ठामि । इतो गमिष्यामि ।

२. मा खलु लघुहृदया अनुनयं बहु मन्ये । किं तु दाक्षिण्यकृत-पश्चात्तापस्य बिभेमि ।

३. प्रावृण्नदीवाप्रसन्ना गता देवी । ननूत्तिष्ठ ।

---

आश्वासितो वयस्यश्चित्रभोजनेन॥ **देवी** । नास्ति भवतोऽपराधः । अहमेवापराद्धा । या प्रतिकूलदर्शना भूत्वा अग्रतस्तिष्ठामि । इतो गमिष्यामि ॥ **अपराधी नामेति** । संरम्भात्क्रोधात् । स्वापराधमेव द्रढयति—सेव्यः सेवार्हो जनः कुपितः । कोपः संजातोऽस्येति कुपितः क्रोधवान् । 'तदस्य संजातम्—' इतीतच्प्रत्ययः । दासश्च निरपराधः कथं नु । तथाच प्रभुक्रोधान्यथानुपपत्त्यैव दासापराधो निश्चीयत इति भावः॥ २० ॥ **देवी** । मा खलु लघुहृदया अनुनयं बहु मन्ये । किंतु दाक्षिण्यकृत-पश्चात्तापस्य बिभेमि ॥ **विदूषकः** । प्रावृण्नदीव अप्रसन्ना गता देवी । ननूत्तिष्ठ ॥ **प्रियवचनकृत इति** । प्रियैर्वचनैः कृतः संपादितो दयितजनानुनयः प्रियजन-

प्रविशति हृदयं न तद्विदां
मणिरिव कृत्रिमरागयोजितः ॥ २१ ॥

**विदूषकः**—अणुऊलं एव्व एदं भवदो । ण हु अक्खिदुक्खिदस्स पमुहे दीवसिहा सहेदि ।

**राजा**—मैवम् । उर्वशीगतमनसोऽपि मम देव्यां स एव बहुमानः । किं तु प्रणिपातलङ्घनादहमस्यां धैर्यमवलम्बिष्ये ।

**विदूषकः**—चिट्ठदु दाव धीरता । बुभुक्खिदबह्मणस्स जीविदं अवलम्बदु भवम् । समओ खु ण्हाणभोअणे सेविदुम् ।

**राजा**—(ऊर्ध्वमवलोक्य ।) कथमर्धं गतं दिवसस्य । अतः खलु

उष्णार्तः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारमुकुलान्याशेरते षट्पदाः ।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैष पञ्जरशुकः क्लान्तो जलं याचते ॥ २२ ॥

(इति निष्क्रान्तौ ।)

## द्वितीयोऽङ्कः ।

१. अनुकूलमेवैतद्भवतः । न खल्वक्षिदुःखितस्य प्रमुखे दीपशिखा सहते ।

२. तिष्ठतु तावद्धीरता । बुभुक्षितब्राह्मणस्य जीवितमवलम्बतां भवान् । समयः खलु स्नानभोजने सेवितुम् ।

कृतं प्रसादनं रसादनुरागादृते योषितां हृदयं न प्रविशति हृदयंगमो न भवति । कृत्रिमरागेणाहार्यलोहितादिना वर्णेन योजितो रञ्जितो मणिः स्फटिकादिस्तद्विदां परीक्षकाणां यथा मनोहरो न भवति ॥ २१ ॥ **विदूषकः** । अनुकूलमेवैतद्भवतः । न खल्वक्षिदुःखितस्य प्रमुखे दीपशिखा सहते । आक्षिदुःखितस्य इत्यत्र प्राकृते पूर्वनिपातानियमाद्दुःखिताक्षस्येति विधेयम् ॥ **विदूषकः** । तिष्ठतु तावद्धीरता । बुभुक्षितब्राह्मणस्य जीवितमवलम्बतां भवान् । समयः खलु स्नानभोजने सेवितुम् ॥ मध्याह्नमेवाह—**उष्णार्त इति** । उष्णार्तो घर्मपीडितः । शिशिरे शीतले । मूलाल-

वाले मूलकृतजलाधारे । 'स्यादालवालमावालमावापः' इति त्रिकाण्डी । शिखी मयूरः । 'शिखावलः शिखी केकी' इति सैव । निषीदत्युपविशति । कर्णिकारमुकुलानि परिव्याधाख्यवृक्षकलिकाः । 'अथ द्रुमोत्पलः । कर्णिकारः परिव्याधः' इति त्रिकाण्डी । निर्भिद्य विदार्य । षट्पदा भ्रमराः ।'इन्दिन्दिरालिषट्चरणचञ्चरीकालिनो द्विरेफाः स्युः ।' इति हलायुधः । कारण्डवाह्वः पक्षिविशेषः । 'तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ।' इति त्रिकाण्डी ॥ २२ ॥ **इति श्रीमद्विन्दुवृन्दपुरंदरयायजूकप्रवरश्रीत्र्यम्बकरोपनामकमौनिकुलमौलिमण्डनश्रीरङ्गनाथदीक्षितकुक्षिजविबुधवरश्रीबालकृष्णदीक्षिताङ्गजरङ्गनाथविरचितायां विक्रमोर्वशीप्रकाशिकायां द्वितीयाङ्कोन्मेषः ॥**



# तृतीयोऽङ्कः ।

(ततः प्रविशतो भरतशिष्यौ ।)

**प्रथमः**—सखे पेलव, अग्निशरणाद्गच्छता महेन्द्रमन्दिरमुपाध्यायेन त्वमासनं ग्राहितः । अहमग्निशरणरक्षार्थं स्थापितः । ततः पृच्छामि गुरोः प्रयोगेण देवपरिषदाराधिता न वेति ।

**द्वितीयः**—[1]गालव, ण आणे कहं आराधिता भोदि । तस्सिं उण सरस्सईकिदकव्वबन्धे लच्छीसअंवरे उव्वसी तेसु तेसु रसन्तरेसु उम्माइआ आसि ।

**प्रथमः**—सदोषावकाश इव वाक्यशेषः ।

**द्वितीयः**—[2]आम । ताए वअणं पमादक्खलिदं आसि ।

**प्रथमः**—किमिव ।

**द्वितीयः**—[3]लच्छीभूमिआए वट्टमाणा उव्वसी वारुणीभूमिआए वट्टमाणाए मेणआए पुच्छिदा । समागदा तेलोक्कपुरिसा सकेसवा लोअवाला । कदमस्सिं दे हिअआहिणिवेसो त्ति ।

१. गालव, न जाने कथमाराधिता भवति । तस्मिन्पुनः सरस्वतीकृतकाव्यबन्धे लक्ष्मीस्वयंवरे उर्वशी तेषु तेषु रसान्तरेषून्मादितासीत् ।

२. आम । तस्या वचनं प्रमादस्खलितमासीत् ।

३. लक्ष्मीभूमिकया वर्तमाना उर्वशी वारुणीभूमिकया वर्तमानया मेनकया पृष्टा । समागतास्त्रैलोक्यपुरुषाः सकेशवा लोकपालाः । कतमस्मिंस्ते हृदयाभिनिवेश इति ।

इदानीं पेलवगालवाख्यभरतमुनिशिष्यमुखेन राज्ञः पुनरुर्वशीसमागमसूचनाय तत्प्रवेशं तावदाह—**ततः प्रविशत इति** । **प्रथमः** । शरणं गृहम् । 'शरणं गृहरक्षित्रोः शरणं रक्षणे वधे ।' इति विश्वलोचनः । प्रयोगेण लक्ष्मीस्वयंवराख्यरूपकेण । परिषत्सभा । 'समज्या परिषत्' इत्यमरः ॥ **द्वितीयः** । गालव, न जाने कथमाराधिता भवति । तस्मिन्पुनः सरस्वतीकृतकाव्यबन्धे लक्ष्मीस्वयंवरे उर्वशी तेषु रसान्तरेषून्मादितासीत् ॥ **द्वितीयः** । आमेति स्मरणे । 'आमानुगुण्ये स्मरणे' इति त्रिकाण्डी । तस्या वचनं प्रमादस्खलितमासीत् ॥ **द्वितीयः** । लक्ष्मीभूमिकया वर्तमाना उर्वशी वारुणीभूमिकया वर्तमानया मेन-

**प्रथमः**—ततस्ततः ।

**द्वितीयः**—ताए[1] पुरिसोत्तमे त्ति भणिदव्वे पुरूरवसि त्ति णिग्गदा वाणी ।

**प्रथमः**—भवितव्यतानुविधायीनि बुद्धीन्द्रियाणि । स तामभिक्रुद्धो मुनिः ।

**द्वितीयः**—सत्ता[2] उवज्झाएण । महिन्देण उण अणुगिहीदा ।

**प्रथमः**—कथमिव ।

**द्वितीयः**—जेण[3] मम तुए उवदेसो लङ्घिदो तेण ण दे दिव्वं ठाणं हविस्सदि त्ति उवज्झाअस्स सआसादो सावो । पुरंदरेण उण लज्जावणदमुहिं उव्वसिं पेक्खिअ एव्वं भणिदम्—'जस्सिं बद्धभावासि तुमं तस्स मे रणसहाअस्स राएसिणो पिअं करणिज्जं । ता दाव तुमं पुरूरवसं जहाकामं उवचिट्ठ जाव सो पडिदिट्ठसंताणो भोदि' त्ति ।

१. तस्याः पुरुषोत्तम इति भणितव्ये पुरूरवसीति निर्गता वाणी ।

२. शप्ता उपाध्यायेन । महेन्द्रेण पुनरनुगृहीता ।

३. येन मम त्वयोपदेशो लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यतीत्युपाध्यायस्य सकाशाच्छापः । पुरंदरेण पुनर्लज्जावनतमुखीमुर्वशीं प्रेक्ष्यैवं भणितम्—'यस्मिन्बद्धभावासि त्वं तस्य मे रणसहायस्य राजर्षेः प्रियं करणीयम् । तत्तावत्त्वं पुरूरवसं यथाकाममुपतिष्ठस्व यावत्स परिदृष्टसंतानो भवति' इति ।

कया पृष्टा । समागतास्त्रैलोक्यपुरुषाः सकेशवा लोकपालाः । कतमास्मिस्ते हृदयाभिनिवेश इति । भूमिका वेषपरिग्रहः । 'भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे ।' इति विश्वः ॥ **द्वितीयः** । तस्याः पुरुषोत्तम इति भणितव्ये पुरूरवसीति निर्गता वाणी ॥ **प्रथमः** । भवितव्यतानुविधायीनि भाव्यनुसारीणि ॥ **द्वितीयः** । शप्ता उपाध्यायेन । महेन्द्रेण पुनरनुगृहीता ॥ **द्वितीयः** । येन मम त्वयोपदेशो लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यतीत्युपाध्यायस्य सकाशाच्छापः । पुरंदरेण पुनर्लज्जावनतमुखीमुर्वशीं प्रेक्ष्यैवं भणितम्—'यस्मिन्बद्धभावासि त्वं तस्य मे रणसहा-

**प्रथमः**—सदृशं पुरुषान्तरवेदिनो महेन्द्रस्य।

**द्वितीयः**—(सूर्यमवलोक्य।) कधापसङ्गेण अवरद्धा अहिसेअवेला। ता उवज्झाअस्स पास्सवत्तिणो होम।

(इति निष्क्रान्तौ।)

**विष्कम्भकः।**

(ततः प्रविशति कञ्चुकी।)

**कञ्चुकी**—

सर्वः कल्पे वयसि यतते लब्धुमर्थान्कुटुम्बी
पश्चात्पुत्रैरपहृतभरः कल्पते विश्रमाय।
अस्माकं तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां
सेवा कारापरिणतिरभूत्स्त्रीषु कष्टोऽधिकारः॥ १॥

---

१. कथाप्रसङ्गेनापराद्धाभिषेकवेला। तदुपाध्यायस्य पार्श्ववर्तिनौ भवावः।

---

यस्य राजर्षेः प्रियं करणीयम्। तत्तावत्त्वं पुरूरवसं यथाकाममुपतिष्ठस्व यावत्स परिदृष्टसंतानो भवति' इति॥ **द्वितीयः**। कथाप्रसङ्गेनापराद्धाभिषेकवेला। तदुपाध्यायस्य पार्श्ववर्तिनौ भवावः॥ **विष्कम्भक इति**। तल्लक्षणं चाभणद्विश्वनाथकविराजः—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य कीर्तितः॥ मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः। शुद्धः स्यात्स तु संकीर्णो नीचमध्यमकल्पितः॥' इति॥ **कञ्चुकीति**। कञ्चुकिलक्षणं दशरूपकादौ—'अन्तःपुरचरो राज्ञो वृद्धो विप्रो गुणान्वितः। उक्तिप्रत्युक्तिकुशलः कञ्चुकीत्यभिधीयते॥' इति॥ **सर्वः कल्प इति**। सर्वः कुटुम्बी। कल्पे समर्थे। 'कृपू सामर्थ्ये' इति धातुः। वयसि तारुण्ये। अर्थान्द्रव्याणि विषयान्वा। लब्धुं प्राप्तुं यतते प्रयत्नवान्भवति। 'अर्थः प्रयोजने वित्ते हेत्वभिप्रायवस्तुषु। शब्दाभिधेयविषये स्यान्निवृत्तिप्रकारयोः॥' इति विश्वलोचनः। पश्चात्तारुण्योत्तरे वयसि पुत्रैरपहृतभरो गृहीतकुटुम्बभारो विश्रमाय विश्रान्त्यै कल्पते भवति। अस्माकं त्वियं सेवा प्रतिष्ठां, प्रकर्षेण स्था स्थितिः प्रतिष्ठा, विश्रमावस्थानं सादयन्ती नाशयन्ती। 'सादयन्ती शरीरम्' इत्यपि पाठः। शरीरं पीडयन्तीत्यर्थः। कारापरिणतिर्बन्धनालयरूपाभूत्। 'काकुः परिणतिः' इत्यपि पाठः। दीनभाषितरूपः परिणामोऽभूत्। स्त्रीषु विषयेऽधिकारः कष्टः। कष्टदायीत्यर्थः। यतो वा-

(परिक्रम्य ।) आदिष्टोऽस्मि सनियमया काशिराजपुत्र्या—यथा 'व्रतसंपादनाय मया मानमुत्सृज्य निपुणिकामुखेन पूर्वं याचितो महाराजः। तदेव मद्वचनाद्विज्ञापय' इति यावदहमवसितसंध्याकार्यं महाराजं पश्यामि । (परिक्रम्यावलोक्य च ।) रमणीयः खलु दिवसावसानवृत्तान्तो राजवेश्मनि ।

उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणो
धूपैर्जालविनिःसृतैर्वलभयः संदिग्धपारावताः ।
आचारप्रयतः सपुष्पबलिषु स्थानेषु चार्चिष्मतीः
संध्यामङ्गलदीपिका विभजते शुद्धान्तवृद्धो जनः ॥ २ ॥

(नेपथ्याभिमुखं दृष्ट्वा ।) अये, इत एव प्रस्थितो देवः ।

परिजनवनिताकरार्पिताभिः
परिवृत एष विभाति दीपिकाभिः।
गिरिरिव गतिमानपक्षसादा-
दनुतटपुष्पितकर्णिकारयष्टिः ॥ ३ ॥

यावदेनमवलोकनमार्गे स्थितः प्रतिपालयामि ।

---

र्धकेऽपि मुक्तिः सुतरां नास्तीति भावः ॥ १ ॥ अवसितं समाप्तम् । वृत्तान्तः प्रकारः । 'वृत्तान्तो भयकात्स्न्र्ये स्यादपि वार्ताप्रकारयोः' इति विश्वलोचनः । **उत्कीर्णा इति** । उत्कीर्णाष्टङ्कव्यक्तीकृतस्वरूपाः । वासयष्टिषु पक्षिनिवासार्थं निखातच्छत्राकारवंशेषु बर्हिणो मयूराः । 'मयूरो बर्हिणो बर्हीं नीलकण्ठो भुजङ्गभुक्' इत्यमरः । जालेभ्यो गवाक्षेभ्यो निःसृतैरगुर्वादिधूपैर्वलभयश्चन्द्रशालाख्यानि शिरोगृहाणि । संदिग्धाः संशयिताः पारावताः कपोता यत्र । 'जालं तु क्षारकानायगवाक्षे दम्भवृक्षयोः' इति विश्वलोचनः । 'वलभी चन्द्रशालिका' इति त्रिकाण्डीशेषः । 'पारावतः कलरवः कपोतः' इति त्रिकाण्डी । आचारे प्रयतस्तत्परः, सदाचारपवित्रो वा । 'पवित्रः प्रयतः पूत' इति त्रिकाण्डी । सपुष्पबलिषु सकुसुमोपहारेषु । 'बलिः पूजोपहारयोः' इति च सा 'शुद्धान्तश्चावरोधश्च' इति च ॥ २ ॥ **परिजनेति** । पक्षसादः पक्षच्छेदः । पश्चान्नञ् । कर्णि-

(ततः प्रविशति यथानिर्दिष्टः सपरिवारो राजा विदूषकश्च ।)

**राजा**—(आत्मगतम् ।)

कार्यान्तरितोत्कण्ठं दिनं मया नीतमनतिकृच्छ्रेण ।
अविनोददीर्घयामा कथं नु रात्रिर्गमयितव्या ॥ ४ ॥

**कञ्चुकी**—(उपगम्य ।) जयतु जयतु देवः । देव, देवी विज्ञापयति—'मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः । तत्र संनिहितेन देवेन प्रतिपालयितुमिच्छामि यावद्रोहिणीसंयोगः' इति ।

**राजा**—विज्ञाप्यतां देवी यस्तव च्छन्द इति ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

**राजा**—वयस्य, किं परमार्थत एव देव्या व्रतनिमित्तोऽयमारम्भः स्यात् ।

**विदूषकः**—तक्केमि[१] संजादपच्चादावा अत्तभोदी वदव्ववदेसेण तत्तभवदो पणिपादलङ्घणं पमज्जिदुकामात्ति ।

**राजा**—उपपन्नं भवानाह । तथा हि ।

अवधूतप्रणिपाताः पश्चात्संतप्यमानमनसोऽपि ।
निभृतैर्व्यपत्रपन्ते दयितानुशयैर्मनस्विन्यः ॥ ५ ॥

तदादेशय मणिहर्म्यपृष्ठस्य मार्गम् ।

१. तर्कयामि संजातपश्चात्तापा अत्रभवती व्रतव्यपदेशेन तत्रभवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति ।

---

कारयष्ट्यो वृक्षोत्पलाख्यवृक्षशाखाः ॥ ३ ॥ **कार्यान्तरितेति** । कार्यैं राजकृत्यैरन्तरिता स्थगिता उत्कण्ठा यस्मिन् । 'उत्कण्ठोत्कलिके समे' इत्यमरः । अनतिकृच्छ्रेण ईषत्कष्टेन । 'स्यात्कष्टं कृच्छ्रमाभीलम्' इति सः । अविनोदोऽसंतोषः ॥४॥ सुदर्शनः शोभनदर्शनः, सुखेन दृश्यत इति वा । छन्दोऽभिप्रायः ॥ अभिलाष इति यावत् । 'अभिप्रायवशौ छन्दौ' इति त्रिकाण्डी ॥ **विदूषकः** । तर्कयामि संजातपश्चात्तापा अत्रभवती व्रतव्यपदेशेन तत्रभवतः प्रणिपातलङ्घनं प्रमार्ष्टुकामेति । व्यपदेशो मिषम् ॥ उपपन्नं युक्तम् ॥ **अवधूतप्रणिपाता इति** । अवधूतस्तिरस्कृतः । निभृतैर्गुप्तैः । दयितविषयकैरनुशयैः पश्चात्तापैर्व्यपत्रपन्ते लज्जन्ते । 'विविधैरनुतप्यन्ते' इति पाठे विविधैर्नानाप्रकारकैर्दयितानुशयैः प्रियानु-

**विदूषकः**—[1]इदो इदो एदु भवम् । इमिणा गङ्गातरङ्गसिसिरेण फलिअमाणिसिलासोवाणेण आरोहदु भवं सव्वदा रमणीअं मणिहम्मपिट्ठअलम् ।

(राजा आरोहति । सर्वे सोपानारोहणं नाटयन्ति ।)

**विदूषकः**—(निरूप्य ।) [2]पच्चासण्णेण चन्दोदएण होदव्वम् । जह तिमिरेण अदिरेचीअमाणं पुव्वदिसामुहं आलोहिअप्पहं दीसदि।

**राजा**—सम्यग्भवान्मन्यते ।

उदयगूढशशाङ्कमरीचिभि-
स्तमसि दूरतरं प्रतिसारिते ।
अलकसंयमनादिव लोचने ।
हरति मे हरिवाहनदिङ्मुखम् ॥ ६ ॥

**विदूषकः**—[3]ही ही । भो, एसो खण्डमोदअसरिसो उदिदो राआ ओसधीणम् ।

१. इत इत एतु भवान् । अनेन गङ्गातरङ्गशिशिरेण स्फटिकमणिशिलासोपानेनारोहतु भवान्सर्वदा रमणीयं मणिहर्म्यपृष्ठतलम् ।

२. प्रत्यासन्नेन चन्द्रोदयेन भवितव्यम् । यथा तिमिरेणातिरिच्यमानं पूर्वदिशामुखमालोहितप्रभं दृश्यते ।

३. ही ही भोः, एष खण्डमोदकसदृश उदितो राजा ओषधीनाम् ।

---

बन्धैरनुतप्यन्ते पश्चात्तापवन्तो भवन्ति । 'दीर्घद्वेषानुतापानुबन्धेष्वनुशयः पुमान्' इति विश्वलोचनः ॥ ५ ॥ **विदूषकः** । इत इत एतु भवान् । अनेन गङ्गातरङ्गशिशिरेण स्फटिकमणिशिलासोपानेनारोहतु भवान्सर्वदा रमणीयं मणिहर्म्यपृष्ठतलम् ॥ **विदूषकः** । प्रत्यासन्नेन चन्द्रोदयेन भवितव्यम् । यथा तिमिरेणातिरिच्यमानं पूर्वदिशामुखमालोहितप्रभं दृश्यते ॥ **उदयगूढेति** । उदयगूढा उदयाचलेन च्छन्नाः । दूरतरमत्यन्तम् । प्रतिसारिते दूरीकृते । अलकानां केशानां संयमनान्नियमनात् । हरिवाहन इन्द्रः । 'जम्भभेदी हरिहयः' इति त्रिकाण्डी ॥ ६॥ **विदूषकः** । ही हीत्याश्चर्ये । 'ही ही चित्रे स्याताम्' इति सागरः । भोः, एष

**राजा**—(सस्मितम् ।) सर्वत्रौदरिकस्याभ्यवहार्यमेव विषयः । (प्राञ्जलिः प्रणम्य ।) भगवन् ऋक्षराज,

रविमाविशते सतां क्रियायै
सुधया तर्पयते पितॄन्सुरांश्च ।
तमसां निशि मूर्च्छतां निहन्त्रे
हरचूडानिहितात्मने नमस्ते ॥ ७ ॥

**विदूषकः**—[1]भो, बम्हणसंकामिदक्खरेण दे पिदामहेण अऽभणुण्णादो सि । ता आसणगदो होहि । जेण अहं वि सुहासीणो होमि ।

**राजा**—(विदूषकवचनं परिगृह्योपविष्टः परिजनं विलोक्य ।) अभिव्यक्तायां चन्द्रिकायां किं दीपिकापौनरुक्त्येन । तद्विश्राम्यन्तु भवत्यः ।

**परिजनः**—[2]जं देव आणवेदि । (इति निष्क्रान्तः ।)

**राजा**—(चन्द्रमवलोक्य ।) वयस्य, परं मुहूर्तादागमनं देव्याः । तद्विविक्ते कथयामि स्वामवस्थाम् ।

१. भोः, ब्राह्मणसंक्रामिताक्षरेण ते पितामहेनाभ्यनुज्ञातोऽसि । तदासनगतो भव । येनाहमपि सुखासीनो भवामि ।

२. यद्देव आज्ञापयति ।

---

खण्डमोदकसदृश उदितो राजा ओषधीनाम् ॥ औदरिकस्योदरकस्य(?)। 'आद्यूनः स्यादौदरिकः' इति त्रिकाण्डी । ऋक्षराजश्चन्द्रः । 'नक्षत्रमृक्षं भं तारा' इति सा ॥ **रविमाविशत इति** । सतां साधूनां क्रियायै दार्शिकपिण्डपितृयज्ञादिक्रियाहेतवे रविमाविशते सूर्यं संगतवते । 'रुचिमावहते' इति पाठे साधूनां क्रियायै कर्मकरणाय रुचिं प्रीतिमावहते कुर्वाणाय । सुधयामृतेन पितॄनग्निष्वात्तादीन्सुरांश्च देवांस्तर्पयते प्रीणयते । पितृदेवतर्पणं च 'प्रथमां पिबते वह्निः' इत्यादि सोमोत्पत्तौ सुप्रसिद्धम् । हरचूडायां निहित आत्मा कालात्मको देहो येन ॥ ७ ॥ **विदूषकः** । भोः, ब्राह्मणसंक्रामिताक्षरेण ते पितामहेनाभ्यनुज्ञातोऽसि । पितामहश्चन्द्रः । अभ्यनुज्ञानुमतिः । तदासनगतो भव । येनाहमपि सुखासीनो भवामि ॥ **परिजनः** । यद्देव आज्ञापयति ॥ **विदूषकः** । भोः, न दृश्यत एषा ।

**विदूषकः**—[1]भो, ण दीसदि एसा । किं दु ताए तारिसं अणुराअं पेक्खिअ सक्कं क्खु आसाबन्धेण अत्ताणअं धारिदुम् ।

**राजा**—एवमेतत् । बलवान्पुनर्मम मनसोऽभितापः ।

नद्या इव प्रवाहो विषमशिलासंकटस्खलितवेगः ।
विघ्नितसमागमसुखो मनसिशयस्त्वनुगुणो भवति ॥ ८ ॥

**विदूषकः**—[2]जहा परिहीअमाणेहिं अङ्गेहिं सोहसि तहा अच्छरेहिं समागमं दे पेक्खामि ।

**राजा**—(निमित्तं सूचयन् ।)

वचोभिराशाजननैर्भवानिव गुरुव्यथम् ।
अयमास्पन्दितैर्बाहुराश्वासयति दक्षिणः ॥ ९ ॥

**विदूषकः**—[3]ण क्खु अण्णहा बम्हणस्स वअणं भोदि ।

(राजा सप्रत्याशस्तिष्ठति ।)

१. भोः, न दृश्यत एषा । किं तु तस्यास्तादृशमनुरागं प्रेक्ष्य शक्यं खल्वाशाबन्धेनात्मानं धारयितुम् ।

२. यथा परिहीयमाणैरङ्गैः शोभसे तथाप्सरोभिः समागमं ते प्रेक्षे ।

३. न खल्वन्यथा ब्राह्मणस्य वचनं भवति ।

किं तु तस्यास्तादृशमनुरागं प्रेक्ष्य शक्यं खल्वाशाबन्धेनात्मानं धारयितुम् ॥ **नद्या इवेति** । विषया निम्नोन्नताः शिलास्तद्रूपं संकटं तत्र स्खलितवेगः प्रतिबद्धरयः । मनसिशयः कामः ॥ ८ ॥ **विदूषकः** । यथा परिहीयमाणैरङ्गैः शोभसे तथाप्सरोभिः समागमं ते प्रेक्षे ॥ निमित्तं शकुनस्वरूपम् ॥ **वचोभिरिति** । आशाजननैर्वचोभिर्भवानिव दक्षिणोऽपसव्योऽयं बाहुरास्पन्दितैः स्फुरणैर्गुरुव्यथमर्थान्मामाश्वासयति समाधत्ते । दक्षिणश्चतुरो हि दुःखितमाश्वासयति । 'आश्वासयति मे मनः' इत्यपि क्वचित्पाठः स्फुटार्थः ॥ ९ ॥ **विदूषकः** । न खल्वन्यथा ब्राह्मणस्य वचनं भवति । अभिसरणवेषः प्रियं प्रति गमनोचितो

(ततः प्रविशत्याकाशयानेन कृताभिसरणवेषा उर्वशी चित्रलेखा च ।)

**उर्वशी**—(आत्मानं विलोक्य ।) सहि, रोअदि दे मे अअं मोत्ताहरणभूसिदो णीलंसुअपरिग्गहो अहिसारिआवेसो ।

**चित्रलेखा**—णत्थि मे वाआविहवो पसंसिदुम् । इदं तु चिन्तेमि । अवि णाम अहं एव्व पुरूरवा भवेअं त्ति ।

**उर्वशी**—सहि, असमत्था क्खु अहम् । तुमं आणेहि तं सिग्घम् । णेहि मं तस्स वा सुहअस्स वसदिम् ।

**चित्रलेखा**—णं पडिबिम्बिअं विअ जामिणीजमुणाए केलाससिहरसस्सिरीअं दे पिअदमस्स भवणं उवगदम्ह ।

---

१. सखि, रोचते ते मेऽयं मुक्ताभरणभूषितो नीलांशुकपरिग्रहोऽभिसारिकावेषः ।

२. नास्ति मे वाग्विभवः प्रशंसितुम् । इदं तु चिन्तयामि । अपि नामाहमेव पुरूरवा भवेयमिति ।

३. सखि, असमर्था खल्वहम् । त्वमानय तं शीघ्रम् । नय मां तस्या वा सुभगस्य वसतिम् ।

४. ननु प्रतिबिम्बितमिव यामिनीयमुनायां कैलासशिखरसश्रीकं ते प्रियतमस्य भवनमुपगते स्वः ।

वेषः ॥ **उर्वशी** । सखि, रोचते ते मेऽयं मुक्ताभरणभूषितो नीलांकुशपरिग्रहोऽभिसारिकावेषः । मुक्ताभरणस्त्यक्तभूषणस्तथापि भूषितः । मुक्ताफलरूपभरणमित्यर्थस्तु अन्धकाराभिसारिकाया विरुद्ध इति ध्येयम् । 'अल्पाभरणभूषितः' इत्यपि पाठः । अभिसारिकालक्षणं तु—'हित्वा लज्जां समाकृष्टा मदनेन मदेन वा । अभिसारयते कान्तं स्वयं वा साभिसारिका ॥' इति ॥ **चित्रलेखा** । नास्ति मे वाग्विभवः प्रशंसितुम् । इदं तु चिन्तयामि । अपि नामाहमेव पुरूरवा भवेयमिति । अपि नामेति संभावनायाम् ॥ **उर्वशी** । सखि, समर्था खल्वहम् । त्वमानय तं शीघ्रम् । नय मां तस्य वा सुभगस्य वसतिम् ॥ **चित्रलेखा** । ननु प्रतिबिम्बितमिव यामिनीयमुनायां कैलासशिखरसश्रीकं ते प्रियतमस्य भवनमुपगते

**उर्वशी**—तेर्णं[1] हि प्पहावेण जाणाहि कहिं सो मम हिअअ-चोरो किंवा अणुचिट्ठदि त्ति ।

**चित्रलेखा**—( आत्मगतम् । ) भोदु[2] । कीडिस्सं दाव एदाए सह । (प्रकाशम् ।) हला, दिट्ठो मए उवहोगक्खमे अवआसे मणोरहलद्धं पिआसमागमसुहं अणुभवन्तो चिट्ठदि ।

**उर्वशी**—अवेहि[3] । हिअअं मे ण पत्तीअदि । हला चित्तलेहे, हिअए काउण किंवि जप्पसि । पिअसमागमस्स अग्गदो एव्व अणेण अवहरिदं मे हिअअम् ।

**चित्रलेखा**—एसो[4] मणिहम्मप्पासादगदो वअस्समेत्तसहाओ राएसी । ता उवसप्पम्ह ।

(उभे अवतरतः ।)

**राजा**—वयस्य, रजन्या सह विजृम्भते मदनबाधा ।

---

१. तेन हि प्रभावेन जानीहि कुत्र स मे हृदयचोरः किं वानुतिष्ठतीति ।

२. भवतु । क्रीडिष्ये तावदेतया सह । सखि, दृष्टो मया उपभोगक्षमेऽवकाशे मनोरथलब्धं प्रियासमागमसुखमनुभवंस्तिष्ठति ।

३. अपेहि । हृदयं मे न प्रत्येति । सखि चित्रलेखे, हृदये कृत्वा किमपि जल्पसि । प्रियसमागमस्याग्रत एवानेनापहृतं मे हृदयम् ।

४. एष मणिहर्म्यप्रासादगतो वयस्यमात्रसहायो राजर्षिः । तदुपसर्पावः

स्वः ॥ **उर्वशी** । तेन हि प्रभावेण जानीहि कुत्र स मे हृदयचोरः किं वानुतिष्ठतीति ॥ **चित्रलेखा** । भवतु । क्रीडिष्ये तावदेतया सह । सखि, दृष्टो मया उपभोगक्षमेऽवकाशे मनोरथलब्धं प्रियासमागमसुखमनुभवंस्तिष्ठति ॥ **उर्वशी** । अपेहि । हृदयं मे न प्रत्येति । सखि चित्रलेखे, हृदये कृत्वा किमपि जल्पसि । प्रियसमागमस्याग्रत एवानेनापहृतं मे हृदयम् । 'उर्वशी' इत्यारभ्य पाठान्तरमपि क्वचिद्यथा—'विषादं नाटयन्ती चित्रलेखा । मुग्धे, का पुनरन्या चिन्ता प्रियासमागमस्य॥ उर्वशी । सखि, अदक्षिणं संदिह्यति मे हृदयम् । अदक्षिणमस्वाधीनम् । 'प्रतिक्षणम्' इत्यपि पाठः ॥ **चित्रलेखा** । एष मणिहर्म्यप्रासादगतो

**उर्वशी**—[1]अणिब्भिण्णत्थेण इमिणा वअणेण आकम्पिदं मे हिअअम्। अन्तरिदा सुणुम्ह आलावम् । जाव णो संसअच्छेदो होदि।

**चित्रलेखा**—[2]जं दे रोअदि।

**विदूषकः**—[3]णं इमे अमिअगब्भा सेवीअन्तु चन्दवादा।

**राजा**—वयस्य, एवमादिभिरनुपक्रम्योऽयमातङ्कः । पश्य ।

कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो
न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः।
मनसिजरुजं सा वा दिव्या ममालमपोहितुं
रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥ १० ॥

**उर्वशी**—[4]हिअअ, जं दाणीं सि मं उज्झिअ इदो संकन्तं तस्स फलं तुए उवलद्धम्।

१. अनिर्भिन्नार्थेनानेन वचनेनाकम्पितं मे हृदयम् । अन्तरिते शृणुव आलापम्। यावदावयोः संशयच्छेदो भवति।

२. यत्ते रोचते।

३. नन्वेतेऽमृतगर्भाः सेव्यन्तां चन्द्रपादाः।

४. हृदय, यदिदानीमसि मामुज्झित्वा इतः संक्रान्तं तस्य फलं त्वयोपलब्धम्।

वयस्यमात्रसहायो राजर्षिः। तदुपसर्पावः। **उर्वशी**। अनिर्भिन्नार्थेनानेन वचनेनाकम्पितं मे हृदयम्। अन्तरिते शृणुव आलापम्। यावदावयोः संशयच्छेदो भवति॥ **चित्रलेखा**। यत्ते रोचते॥ **विदूषकः**। नन्वेतेऽमृतगर्भाः सेव्यन्तां चन्द्रपादाः॥ अनुपक्रम्योऽचिकित्स्यः। आतङ्को रोगः, संतापो वा। 'आतङ्को रोगसंतापशङ्कासु मुरजध्वनौ' इति विश्वलोचनः॥ **कुसुमशयनमिति**। प्रत्यग्रं नूतनम्। सर्वाङ्गीणं सर्वाङ्गव्यापि। मलयजं चन्दनम्। मणियष्टयो मणियुक्ता हाराः। 'यष्टिः शस्त्रान्तरे चैव हारे हारात्परेऽपि च' इति विश्वलोचनः। मनसिजरुजं मदनबाधाम्। अलं समर्था। अपोहितुं दूरीकर्तुम्। रहस्येकान्ते। लघयेल्लघूकुर्यात्॥ १० ॥ **उर्वशी**। हृदय, यदिदानीमसि मामुज्झित्वा इतः संक्रा-

**विदूषकः**—[1]आम। भो, अहंपि जदा सिहरिणीं रसालं अ ण लहे तदा तं एव्व चिन्तयन्तो आसादेमि सुहम्।

**राजा**—संपद्यत इदं भवतः।

**विदूषकः**—[2]तुमं वि तं अइरेण पाविहिसि।

**राजा**—सखे, एवं मन्ये।

**चित्रलेखा**—[3]सुणु असंतुट्ठे।

**विदूषकः**—[4]कहं विअ।

**राजा**—

इदं तया रथक्षोभादङ्गेनाङ्गं निपीडितम्।
एकं कृति शरीरेऽस्मिन्शेषमङ्गं भुवो भरः॥ ११॥

**उर्वशी**—[5]किं दाणीं अवरं विलम्बिस्सम्। (सहसोपगम्य) हला चित्तलेहे, अग्गदो वि मए ट्ठिदाए उदासीणो महाराओ।

१. आम। भोः, अहमपि यदा शिखरिणीं रसालं च न लभे तदा तदेव चिन्तयन्नासादयामि सुखम्।

२. त्वमपि तामचिरेण प्राप्स्यसि।

३. शृणु असंतुष्टे।

४. कथमिव।

५. किमिदानीमपरं विलम्बिष्ये। सखि चित्रलेखे, अग्रतोऽपि मम स्थिताया उदासीनो महाराजः।

न्तं तस्य फलं त्वयोपलब्धम्। इत इत्यस्मिन्राजनि। संक्रान्तं निविष्टम्॥ **विदूषकः**। आमेत्यानुकूल्ये, स्मरणे वा। भोः, अहमपि यदा शिखरिणीम्। एलालवङ्गकर्पूरादिसुरभिद्रव्यमिश्रितं दुग्धेन सह गालितं सितासंगतं दधि शिखरिणीत्युच्यते। दध्यतिरिक्तपूर्वोक्तद्रव्यमिश्रितः पक्वकदलीफलान्तःसारोऽपि तत्पदवाच्यः। रसालं च न लभे। रसालमाम्रविशेषफलम्। तदा तदेव चिन्तयन्नासादयामि सुखम्॥ **विदूषकः**। त्वमपि तामचिरेण प्राप्स्यसि॥ **चित्रलेखा**। शृणु असंतुष्टे॥ **विदूषकः**। कथमिव। **इदं तयेति**। रथस्य क्षोभादुच्चनीचप्रदेशेषूद्घातात्। एकमङ्गमस्मिञ्शरीरे कृति कुशलम्॥ ११॥ **उर्वशी**। किमिदानीमपरं विलम्बिष्ये। सखि चित्रलेखे, अग्रतोऽपि मम स्थिताया उदासीनो

**चित्रलेखा**—(सस्मितम्।) अदितुवरिदे, असंक्खित्ततिरक्करिणी असि। (नेपथ्ये।)

इदो इदो भट्टिणी।

(सर्वे कर्णं ददति। उर्वशी सह सख्या विषण्णा।)

**विदूषकः**—अइ भो, उवट्टिदा देवी। ता सुमुद्दिदमुहो होहि।

**राजा**—भवानपि संवृताकारमास्ताम्।

**उर्वशी**—हला, किं एत्थ करणिज्जम्।

**चित्रलेखा**—अलं आवेएण। अन्तरिदा दाणीं सि तुमम्। विहिदणिअमवेसा राअमहिसी दीसदि। ता एसा चिरं ण चिट्ठिस्सदि त्ति।

(ततः प्रविशति धृतोपहारपरिजना देवी।)

**देवी**—(चन्द्रमालोक्य।) एसो रोहिणीजोएण अहिअं सोहदि भअवं मिअलञ्छणो।

**चेटी**—णं संपज्जिस्सदि भट्टिणीसहिदस्स भट्टिणो विसेसरमणीअदा।

(इति परिक्रामतः।)

---

१. अतित्वरिते, असंक्षिप्ततिरस्करिण्यसि।

२. इत इतो भट्टिनी।

३. अयि भोः, उपस्थिता देवी। तत्सुमुद्रितमुखो भव।

४. सखि, किमत्र करणीयम्।

५. अलमावेगेन। अन्तरिता इदानीमसि त्वम्। विहितनियमवेषा राजमहिषी दृश्यते। तदेषा चिरं न स्थास्यतीति।

६. एष रोहिणीयोगेनाधिकं शोभते भगवान्मृगलाञ्छनः।

७. नूनं संपत्स्यते भट्टिनीसहितस्य भर्तुर्विशेषरमणीयता।

---

महाराजः॥ **चित्रलेखा**। अतित्वरिते, असंक्षिप्ततिरस्करिण्यसि। **नेपथ्ये**। इत-इतो भट्टिनी॥ **विदूषकः**। अयि भोः, उपस्थिता देवी। तत्सुमुद्रितमुखो भव॥ **उर्वशी**। सखि, किमत्र करणीयम्॥ **चित्रलेखा**। अलमावेगेन। अन्तरिता इदानीमसि त्वम्। विहितनियमवेषा राजमहिषी दृश्यते। तदेषा चिरं न स्थास्यतीति। **देवी**। एष रोहिणीयोगेनाधिकं शोभते भगवान्मृगलाञ्छनः॥ **चेटी**।

**विदूषकः**—[1]भो, णं जाणामि सोत्थिवाअणं वि देदि । आदु भवन्तं अन्तरेण चन्दव्वदव्ववदेसेण मुक्करोसा अज्ज मे अक्खीणं सुहदंसणा देवी ।

**राजा**—(सस्मितम् ।) उभयमपि घटते । तथापि भवता यत्पश्चादभिहितं तन्मां प्रति भाति । यदत्रभवती

सितांशुका मङ्गलमात्रभूषणा
पवित्रदूर्वाङ्कुरलाञ्छितालका ।
व्रतापदेशोज्झितगर्ववृत्तिना
मयि प्रसन्ना वपुषैव लक्ष्यते ॥ १२ ॥

**देवी**—(उपगम्य ।) [2]जेदु जेदु महाराओ ।

**परिजनः**—[3]जेदि जेदि देवो ।

**विदूषकः**—[4]सोत्थि भोदीए ।

**राजा**—स्वागतं देव्यै । (तां हस्तेन गृहीत्वोपवेशयति ।)

**उर्वशी**—[5]ट्ठाणे इअं वि देवीसद्देण उच्चारीअदि । णहि किंवि परिहीअदि सचीदो ओजस्सिदाए ।

---

१. भोः, ननु जानामि स्वस्तिवाचनमपि ददाति । उत भवन्तमन्तरेण चन्द्रव्रतव्यपदेशेन मुक्तरोषा अद्य मेऽक्ष्णोः सुखदर्शना देवी ।

२. जयतु जयतु महाराजः ।

३. जयति जयति देवः ।

४. स्वस्ति भवत्यै ।

५. स्थाने इयमपि देवीशब्देनोच्चार्यते । नहि किमपि परिहीयते शचीत ओजस्वितया ।

नूनं संपत्स्यते भट्टिनीसहितस्य भर्तुर्विशेषरमणीयता ॥ **विदूषकः** । भोः, ननु जानामि स्वस्तिवाचनमपि ददाति । उत भवन्तमन्तरेण । भवन्तमुद्दिश्येत्यर्थः । चन्द्रव्रतव्यपदेशेन मुक्तरोषा अद्य मेऽक्ष्णोः सुखदर्शना देवी । व्यपदेशेन मिषेण । **सितांशुकेति** । मङ्गलं हरिद्रोद्वर्तनकुङ्कुमादि तन्मात्रभूषणा । अपदेशो मिषम् । 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः ॥ १२ ॥ **देवी** । जयतु जयतु महाराजः ॥ **परिजनः** । जयति जयति देवः ॥ **विदूषकः** । स्वस्ति भवत्यै ॥ **उर्वशी** । स्थाने इयमपि देवीशब्देनोच्चार्यते । स्थाने युक्तम् । नहि किमपि परिहीयते श-

**चित्रलेखा**—[1]अत्थि अवरं मुहं मन्तिदुं दे ।

**देवी**—[2]अज्जउत्तं पुरोकदुअ को वि वदविसेसो मए संपादणीओ । ता मुहूत्तं उवरोधो सहीअदु ।

**राजा**—मा मैवम् । अनुग्रहः खलु, नोपरोधः ।

**विदूषकः**—[3]ईरिसो णं सोत्थिवाअणएहिं दे बहुसो उवरोधो होदु

**राजा**—किं नामधेयमेतद्देव्या व्रतम् ।

(देवी निपुणिकामवलोकयति ।)

**निपुणिका**—[4]भट्टा, पिअप्पसादणं णाम ।

**राजा**—(देवीं विलोक्य ।) यद्येवम्

अनेन कल्याणि मृणालकोमलं
व्रतेन गात्रं ग्लपयस्यकारणम् ।
प्रसादमाकाङ्क्षति यस्तवोत्सुकः
स किं त्वया दासजनः प्रसाद्यते ॥ १३ ॥

**उर्वशी**—(सवैलक्ष्यस्मितम् ।) [5]महन्तो खु एदस्स इमस्सिं बहुमाणो ।

१. अस्त्यपरं मुखं मन्त्रयितुं ते ।

२. आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया संपादनीयः । तन्मुहूर्तमुपरोधः सह्यताम् ।

३. ईदृशो ननु स्वस्तिवाचनकैस्ते बहुश उपरोधो भवतु ।

४. भर्तः, प्रियप्रसादनं नाम ।

५. महान्खल्वेतस्यैतस्यां बहुमानः ।

चीत ओजस्वितया ॥ **चित्रलेखा** । अस्ति अपरं मुखं मन्त्रयितुं ते ॥ **देवी** । आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया संपादनीयः । तन्मुहूर्तमुपरोधः सह्यताम् ॥ **विदूषकः** । ईदृशो ननु स्वस्तिवाचनकैस्ते बहुश उपरोधो भवतु । **निपुणिका** । भर्तः, प्रियप्रसादनं नाम ॥ **अनेनेति** । गात्र शरीरम् । 'गात्रं गजाग्रजङ्घादिविभागेऽप्यङ्गदेहयोः' इति विश्वलोचनः । ग्लपयसि पीडयसि । उत्सुक उत्कण्ठितः ॥ १३ ॥ **उर्वशी** । महान्खल्वेतस्यैतस्यां बहुमानः ॥ **चित्रलेखा** ।

**चित्रलेखा**—[1]अइ मुद्धे, अण्णसंकन्तप्पेमाणो णाअरा भारिआए अहिअं दक्खिणा होन्ति।

**देवी**—[2]एदस्स वदस्स अअं पहावो जं एत्तिअं वददि अज्जउत्तो।

**विदूषकः**—[3]विरमदु भवं। ण जुत्तं दे सुहासिदं प्पच्चक्खिदुम्।

**देवी**—[4]दारिआओ, आणेध ओवहारिअं जाव हम्मगदे चन्दवादे अच्चेमि।

**परिजनः**—[5]जं देवी आणवेदि। एसो उवहारो।

**देवी**—[6]उवणेध। (नाट्येन कुसुमादिभिश्चन्द्रपादानभ्यर्च्य।) हञ्जे, इमेहिं उवहारेहिं मोदएहिं अ अज्जमाणवअं कञ्चुइं अच्चेध।

---

१. अयि मुग्धे, अन्यसंक्रान्तप्रेमाणो नागरा भार्यायामधिकं दक्षिणा भवन्ति।

२. एतस्य व्रतस्यायं प्रभावो यदेतावद्वदत्यार्यपुत्रः।

३. विरमतु भवान्। न युक्तं तव सुभाषितं प्रत्याख्यातुम्।

४. दारिकाः, आनयतौपहारिकं यावद्धर्म्यगतांश्चन्द्रपादानर्चयामि।

५. यद्देव्याज्ञापयति। एष उपहारः।

६. उपनयत। चेट्यः, एतैरुपहारैर्मोदकैश्च आर्यमाणवकं कञ्चुकिनमर्चयत

'सदृशमेव यदेषा आकृतिर्बहुमाना' इति क्वचित्पाठः। अयि मुग्धे, अन्यसंक्रान्तप्रेमाणो नागरा भार्यायामधिकं दक्षिणा भवन्ति। दक्षिणा अनुकूलाः। **देवी**। एतस्य व्रतस्यायं प्रभावो यदेतावद्वदत्यार्यपुत्रः॥ **विदूषकः**। विरमतु भवान्। न युक्तं तव सुभाषितं प्रत्याख्यातुम्॥ **देवी**। दारिकाः, आनयतौपहारिकं यावद्धर्म्यगतांश्चन्द्रपादानर्चयामि। औपहारिकं पूजासामग्री॥ **परिजनः**। यद्देव्याज्ञापयति। एष उपहारः॥ **देवी**। उपनयत। चेट्यः, एतैरुपहारैर्मोदकैश्च आर्यमाणवकं कञ्चुकिनमर्चयत। 'एतानुपहारमोदकांल्लम्भयत' इति क्वचित्पाठः।

**परिजनः**—[1]जं देवी आणवेदि । अज्ज माणवअ, एदं उववादिदं सोत्थिवाअणअं ।

**विदूषकः**—(मोदकशरावं गृहीत्वा ।) [2]सोत्थि भोदीए । बहुफलं एदं वदं होदु ।

**चेटी**—[3]अज्ज कञ्चुइ, इदं तुह ।

**कञ्चुकी**—(गृहीत्वा ।) स्वस्ति देव्यै ।

**देवी**—[4]अज्जउत्त, इदो दाव ।

**राजा**—अयमस्मि ।

**देवी**—(राज्ञः पूजामभिनीय प्राञ्जलिः प्रणम्य च ।) [5]एसा देवदामिहुणं रोहिणीमिअलञ्छणं सक्खीकरिअ अज्जउत्तं अणुप्पसादेमि । अज्जप्पहुदि अज्जउत्तो जं इत्थिअं कामेदि, जा अज्जउत्तसमागमप्पणइणी, ताए सह अप्पदिबन्धेण वत्तिदव्वम् ।

**उर्वशी**—[6]अम्महे, ण आणामि किंपरं से वअणम् । मम उण विस्सासविसदं हिअअं संवुत्तम् ।

---

१. यद्देव्याज्ञापयति । आर्य माणवक, एतदुपपादितं स्वस्तिवायनकम् ।

२. स्वस्ति भवत्यै । बहुफलमेतद्व्रतं भवतु ।

३. आर्य कञ्चुकिन्, इदं तव ।

४. आर्यपुत्र, इतस्तावत् ।

५. एषा देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्य आर्यपुत्रमनुप्रसादयामि । अद्यप्रभृति आर्यपुत्रो यां स्त्रियं कामयते, या आर्यपुत्रसमागमप्रणयिनी तया सहाप्रतिबन्धेन वर्तितव्यम् ।

६. अम्महे । न जानामि किंपरमस्या वचनम् । मम पुनर्विश्वासविशदं हृदयं संवृत्तम् ।

---

लम्भयत प्रापयत ॥ **परिजनः** । यद्देव्याज्ञापयति । आर्य माणवक, एतदुपपादितं स्वस्तिवायनकम् ॥ **विदूषकः** । स्वस्ति भवत्यै । बहुफलमेतद्व्रतं भवतु । **चेटी** । आर्य कञ्चुकिन्, इदं तव ॥ **देवी** । आर्यपुत्र, इतस्तावत् । **देवी** । एषा देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्य आर्यपुत्रमनुप्रसादयामि । अद्यप्रभृति आर्यपुत्रो यां स्त्रियं कामयते, या आर्यपुत्रसमागमप्रणयिनी, तया सहाप्रतिबन्धेन वर्तितव्यम् ॥ **उर्वशी** । अम्महे आश्चर्ये । न जानामि किंपरमस्या वचनम् । मम

**चित्रलेखा**—सहि[1], महाणुभावाए पतिव्वदाए अब्भणुण्णादो अणन्तराओ दे पिअसमागमो भविस्सदि ।

**विदूषकः**—( अपवार्य ।) छिन्नहत्थो[2] पुरदो वज्झे पलाइदे भणादि—'गच्छ धम्मो भविस्सदि' त्ति । ( प्रकाशम् ।) भोदि, किं उदासीणो तत्तभवं ।

**देवी**—मूढ[3], अहं खु अत्तणो सुहावसाणेण अज्जउत्तस्स सुहं इच्छामि । एत्तिएण चिन्तेहि दाव पिओ ण वेत्ति ।

**राजा**—

दातुमसहने प्रभवस्यन्यस्यै कर्तुमेव वा दासम् ।
नाहं पुनस्तथा त्वयि यथा हि मां शङ्कसे भीरु ॥ १४ ॥

**देवी**—भोदु[4] मा वा । जधाणिद्दिट्ठं संपादिदं पिअप्पसादणं व्वदम् । आअच्छध परिजणा, गच्छह्म ।

१. सखि, महानुभावया पतिव्रतयाभ्यनुज्ञातोऽनन्तरायस्ते प्रियसमागमो भविष्यति ।

२. छिन्नहस्तः पुरतो वध्ये पलायिते भणति—'गच्छ धर्मो भविष्यति' इति । भवति, किमुदासीनस्तत्रभवान् ।

३. मूढ, अहं खल्वात्मनः सुखावसानेनार्यपुत्रस्य सुखमिच्छामि । एतावता चिन्तय तावत्प्रियो न वेति ।

४. भवतु मा वा । यथानिर्दिष्टं संपादितं प्रियप्रसादनं व्रतम् । आगच्छत परिजनाः, गच्छामः ।

पुनर्विश्वासविशदं हृदयं संवृत्तम् ॥ **चित्रलेखा** । सखि, महानुभावया पतिव्रतयाभ्यनुज्ञातोऽनन्तरायस्ते प्रियसमागमो भविष्यति ॥ **विदूषकः** । अपवारितलक्षणं प्रागुक्तम् । छिन्नहस्तः पुरतो वध्ये पलायिते भणति—'गच्छ धर्मो भविष्यति' इति । प्रकाशम् । भवति, किमुदासीनस्तत्रभवान् ॥ **देवी** । मूढ, अहं खल्वात्मनः सुखावसानेनार्यपुत्रस्य सुखमिच्छामि । एतावता चिन्तय तावत्प्रियो न वेति ॥ **दातुमिति** । प्रभवसि समर्थासि । भीरु भयशीले ॥१४॥ **देवी** । भवतु मा वा ।

**राजा**—प्रिये, न खलु प्रसादितोऽस्मि यदि संप्रति विहाय गम्यते।

**देवी**—[1]अज्जउत्त, ण लङ्घिदपुव्वो संपदं णिअमो। (इति सपरिजना निष्क्रान्ता।)

**उर्वशी**—[2]हला, पिअकलत्तो राएसी। न उण हिअअं णिवत्तेदुं सक्कणोमि।

**चित्रलेखा**—[3]कधं त्थिरासो णिवत्तीअदि।

**राजा**—(आसनमुपसृत्य।) वयस्य, न खलु दूरं गता देवी।

**विदूषकः**—[4]भण वीसद्धो जं सि वत्तुकामो। असाज्झो त्ति परिच्छिदिअ आदुरो विअ वेज्जेण अइरेण मुक्को तत्तभवं भोदीए।

**राजा**—अपि नामोर्वशी।

**उर्वशी**—(आत्मगतम्।) [5]किदत्था भवे।

**राजा**—

गूढं नूपुरशब्दमात्रमपि मे कान्तं श्रुतौ पातये-
त्पश्चादेत्य शनैः करोत्पलवृते कुर्वीत वा लोचने।

---

१. आर्यपुत्र, न लङ्घितपूर्वः सांप्रतं नियमः।

२. सखि, प्रियकलत्रो राजर्षिः। न पुनर्हृदयं निवर्तयितुं शक्नोमि।

३. कथं स्थिराशो निवर्त्यते।

४. भण विस्रब्धो यदसि वक्तुकामः। असाध्य इति परिच्छिद्य आतुर इव वैद्येनाचिरेण मुक्तस्तत्रभवान्भवत्या।

५. कृतार्था भवेत्।

यथानिर्दिष्टं संपादितं प्रियप्रसादनं व्रतम्। आगच्छत परिजनाः,गच्छामः। **देवी**। आर्यपुत्र, न लङ्घितपूर्वः सांप्रतं नियमः॥ **उर्वशी**। सखि, प्रियकलत्रो राजर्षिः। न पुनर्हृदयं निवर्तयितुं शक्नोमि॥ **चित्रलेखा**। कथं स्थिराशो निवर्त्यते। **विदूषकः**। भण विस्रब्धो यदसि वक्तुकामः। असाध्य इति परिच्छिद्य आतुर इव वैद्येनाचिरेण मुक्तस्तत्रभवान्भवत्या॥ 'अपि नामोर्वशी' इति गूढं 'नूपुर—' इत्यनन्तरमग्रे वक्ष्यमाणपद्यान्वयि चूर्णकम्॥ **उर्वशी**। आत्मगतम्। कृतार्था भवेत्। इदमुर्वशीवचो राज्ञोऽपरिसमाप्तवचनोत्तरवाक्यत्वेनान्तरेवात्मगतमाशंसनम्।

हर्म्येऽस्मिन्नवतीर्य साध्वसवशान्मन्दायमानाबला-
दानीयेत पदात्पदं चतुरया सख्या ममोपान्तिकम् ॥ १५॥

**चित्रलेखा**—[1]हला उव्वसि, इमं दाव से मणोरहं संपादेहि ।

**उर्वशी**—(ससाध्वसम् ।) [2]कीडिस्सं दाव । (इति पृष्ठेनागत्य राज्ञो लोचने संवृणोति ।)

(चित्रलेखा विदूषकं संज्ञां लम्भयति ।)

**राजा**—(स्पर्शं रूपयित्वा ।) सखे, न खलु नारायणोरुसंभवा वरोरुः ।

**विदूषकः**—[3]कधं भवं अवगच्छदि ।

**राजा**—किमत्र ज्ञेयम्

अन्यत्कथमिव पुलकैः कलितं मम गात्रकं करस्पर्शात् ।
नोच्छ्वसिति तपनकिरणैश्चन्द्रस्येवांशुभिः कुमुदम् ॥ १६ ॥

**उर्वशी**—[4]अम्महे, वज्जलेवघडिदं विअ मे हत्थजुअलं ण सम-

---

१. सखि उर्वशि, इमं तावदस्य मनोरथं संपादय ।

२. क्रीडिष्ये तावत् ।

३. कथं भवानवगच्छति ।

४. अम्महे, वज्रलेपघटितमिव मे हस्तयुगलं न समर्थास्म्यपनेतुम् ।

---

**गूढमिति ।** अपि नामेति संभावनायाम् । उर्वशीति पूर्वेण संबन्धः । गूढं निभृतं यथा तथा कान्तं मनोज्ञं नूपुरशब्दमात्रमपि मञ्जीरशिञ्जितमात्रमपि मे श्रुतौ कर्णे पातयेत्कर्णगोचरं कुर्यात् । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । हर्म्ये धनिगृहे । 'हर्म्यादि धनिनां वासः' इत्यमरः ॥ १५ ॥ **चित्रलेखा ।** सखि उर्वशि, इमं तावदस्य मनोरथं संपादय ॥ **उर्वशी ।** क्रीडिष्ये तावत् ॥ न खल्विति शिरश्चालने । अपि तु सैवेत्यर्थः । नारायणोरुसंभवा उर्वशी ॥ **विदूषकः ।** कथं भवानवगच्छति ॥ **अन्यदिति ।** अन्यदित्यन्यथेत्यर्थे । तथा च सैवेयमन्यथा करस्पर्शात् । अर्थादस्या मम गात्रकं पुलकैः कलितं कथमिव । यद्वा करस्पर्शान्मम गात्रकं पुलकैः कलितं सदन्यदिवानिर्वचनीयावस्थं कथं जातमिति शेषः । पाठान्तरे—अन्या स्त्री अनङ्गक्लिष्टं मदनपीडितं मेऽङ्गं करस्पर्शाद्गात्रकं पुलकैः कलितं सदन्यदिव सुखयति । एतदन्यथानुपपत्त्यैव सेत्यर्थः । तपनः सूर्यः ॥ १६ ॥ **उर्वशी ।** अम्महे आश्चर्ये । वज्रलेपघटितमिव मे हस्तयुगलं न समर्थास्म्यपनेतुम् ।

त्थाम्हि अवणेदुम् । (इति मुकुलिताक्षी चक्षुषो हस्तावपनीय ससाध्वसा तिष्ठति ।)

(राजा हस्ताभ्यां गृहीत्वा परिवर्तयति ।)

**उर्वशी**—(कथंचिदुपसृत्य ।) जेदु[1] जेदु महाराओ ।

**चित्रलेखा**—सुहं[2] दे वअस्स ।

**राजा**—नन्वेतदुपपन्नम् ।

**उर्वशी**—हला,[3] देवीए दिण्णो महाराओ । अदो से प्पणयवदी विअ सरीरसंगदाम्हि । मा खु मं पुरोभाइणी त्ति समत्थेहि ।

**विदूषकः**—कधं[4] इह ज्जेव तुम्हाणं अत्थमिदो सूरो ।

**राजा**—(उर्वशीमवलोक्य ।)

देव्या दत्त इति यदि व्यापारं व्रजसि मे शरीरेऽस्मिन् ।
प्रथमं कस्यानुमते चोरितमयि मे त्वया हृदयम् ॥ १७ ॥

**चित्रलेखा**—वअस्स,[5] णिरुत्तरा एसा । मम संपदं विण्णविअं सुणीअदु ।

**राजा**—अवहितोऽस्मि ।

---

१. जयतु जयतु महाराजः ।

२. सुखं ते वयस्य ।

३. सखि, देव्या दत्तो महाराजः । अतोऽस्य प्रणयवतीव शरीरसंगतास्मि । मा खलु मां पुरोभागिनीति समर्थय ।

४. कथमत्रैव युवयोरस्तमितः सूरः ।

५. वयस्य, निरुत्तरैषा । मम सांप्रतं विज्ञापितं श्रूयताम् ।

---

**उर्वशी** । जयतु जयतु महाराजः ॥ **चित्रलेखा** । सुखं ते वयस्य ॥ **उर्वशी** । सखि, देव्या दत्तो महाराजः । अतोऽस्य प्रणयवतीव शरीरसंगतास्मि । मा खलु मां पुरोभागिनीति समर्थय । 'दोषैकदृक्पुरोभागी' इति हैमः ॥ **विदूषकः** । कथमत्रैव युवयोरस्तमितः सूरः । 'सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः' इत्यमरः । 'सुज्जो' इति पाठे सूर्यः ॥ **देव्येति** । व्यापारमालिङ्गनाद्यारम्भम् ॥ १७ ॥ **चित्रलेखा** । वयस्य, निरुत्तरैषा । मम सांप्रतं विज्ञापितं श्रूय-

**चित्रलेखा**—[1]वसन्ताणन्तरं उण्णसमए भअवं सुज्जो मए उवअरिदव्वो । ता जधा इअं मे पिअसही सग्गस्स ण उक्कण्ठेदि तहा वअस्सेण कादव्वम् ।

**विदूषकः**—[2]भोदि, किं वा सग्गे सुमरिदव्वम् । ण तत्थ खाईअदि ण पीअदि । केवलं अणिमिसेहिं अच्छीहिं मीणदा अवलम्बीअदि ।

**राजा**—वयस्य,

अनिर्देश्यसुखं स्वर्गं कथं विस्मारयिष्यते ।
अनन्यनारीसामान्यो दासस्त्वस्याः पुरूरवाः ॥ १८ ॥

**चित्रलेखा**—[3]अणुगिहीदम्हि । हला उव्वसि, अकादरा भविअ विसज्जेहि मम् ।

**उर्वशी**—(चित्रलेखां परिष्वज्य सकरुणम् ।) [4]सहि, मा खु मं विसुमरोसे ।

---

१. वसन्तानन्तरमुष्णसमये भगवान्सूर्यो मयोपचरितव्यः । तद्यथेयं मे प्रियसखी स्वर्गस्य नोत्कण्ठते तथा वयस्येन कर्तव्यम् ।

२. भवति, किं वा स्वर्गे स्मर्तव्यम् । न तत्र खाद्यते न पीयते । केवलमनिमिषैरक्षिभिर्मीनतावलम्ब्यते ।

३. अनुगृहीतास्मि सखि उर्वशि, अकातरा भूत्वा विसर्जय माम् ।

४. सखि, मा खलु मां विस्मरिष्यसि ।

---

ताम् ॥ अवहितः सावधानः । **चित्रलेखा** । वसन्तानन्तरमुष्णसमये भगवान्सूर्यो मयोपचरितव्यः । उपचरितव्यः सेवनीयः । तद्यथेयं मे प्रियसखी स्वर्गस्य नोत्कण्ठते तथा वयस्येन कर्तव्यम् । अनेन भाविविरहसूचनमित्यग्रिमाङ्कार्थोपक्षेपादङ्कावतारोऽयम् ॥ **विदूषकः** । भवति, किं वा स्वर्गे स्मर्तव्यम् । न तत्र खाद्यते न पीयते । केवलमनिमिषैरक्षिभिर्मीनतावलम्ब्यते ॥ **अनिर्देश्येति** । अनिर्देश्यं वक्तुमशक्यं सुखं यस्य । तुः परमित्यर्थे । अनन्यनारीसामान्यः असाधारण इत्यर्थः ॥ १८ ॥ **चित्रलेखा** । अनुगृहीतास्मि । सखि उर्वशि, अकातरा भूत्वा विसर्जय माम् ॥ **उर्वशी** । सखि, मा खलु मां विस्मरिष्यसि ॥ **चित्रलेखा** ।

**चित्रलेखा**—(सस्मितम् ।) [1]वअस्सेण संगदा तुमं मए एव्वं जाचिदव्वा । (इति राजानं प्रणम्य निष्क्रान्ता ।)

**विदूषकः**—[2]दिट्ठिआ मणोरहसिद्धीए वट्टदि भवम् ।

**राजा**—इमां तावन्मनोरथसिद्धिं पश्य ।

सामन्तमौलिमणिरञ्जितपादपीठ-
मेकातपत्रमवनेर्न तथा प्रभुत्वम् ।
अस्याः सखे चरणयोरहमद्य कान्त-
माज्ञाकरत्वमधिगम्य यथा कृतार्थः ॥ १९ ॥

**उर्वशी**—[3]णत्थि मे वाआविहवो अदो अवरं मन्तिदुम् ।

**राजा**—(उर्वशीं हस्तेनावलम्ब्य ।) अहो, अविरुद्धसंवर्धनमेतदिदानीमीप्सितलम्भानाम् । यतः ।

पादास्त एव शशिनः सुखयन्ति गात्रं
बाणास्त एव मदनस्य मनोनुकूलाः ।

१. वयस्येन संगता त्वं मयैवं याचितव्या ।

२. दिष्ट्या मनोरथसिद्ध्या वर्तते भवान् ।

३. नास्ति मे वाग्विभवोऽतोऽपरं मन्त्रयितुम् ।

---

वयस्येन संगता त्वं मयैवं याचितव्या ॥ **विदूषकः** । दिष्ट्या मनोरथसिद्ध्या वर्तते भवान् ॥ **सामन्तमौलीति** । सामन्ता अधीशाः । 'सामन्तः स्यादधीश्वरे' इति त्रिकाण्डी । मौलयः किरीटाः । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इति सैव । अवनेर्भुवः प्रभुत्वं स्वाम्यमधिगम्य प्राप्य तथा कृतार्थो न । आज्ञाकरत्वं सेवकत्वम् ॥ १९ ॥ **उर्वशी** । नास्ति मे वाग्विभवोऽतोऽपरं मन्त्रयितुम् ॥ ईप्सितलम्भानां वाञ्छितप्राप्तीनाम् ॥ **पादा इति** । पादाः किरणाः । संरम्भरूक्षं

संरम्भरूक्षमिव सुन्दरि यद्यदासी-
त्त्वत्संगमेन मम तत्तदिवानुनीतम्॥ २० ॥

**उर्वशी**—[1]अवराद्धाम्हि चिरआरिआ महाराअस्स।

**राजा**—सुन्दरि, मा मैवम्।

यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम्।
निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः॥ २१ ॥

**विदूषकः**—[2]भोदि, सेविदा पदोसरमणीआ चन्दवादा। ता समओ खु दे गेहप्पवेसस्स।

**राजा**—तेन हि सख्या मार्गमादेशय।

**विदूषकः**—[3]इदो इदो भोदी।

(इति परिक्रामन्ति।)

**राजा**—सुन्दरि, इयमिदानीं मे प्रार्थना।

**उर्वशी**—[4]कीरिसी सा।

---

१. अपराद्धास्मि चिरकालिका महाराजस्य।

२. भवति, सेविताः प्रदोषरमणीयाश्चन्द्रपादाः। तत्समयः खलु ते गेहप्रवेशस्य।

३. इत इतो भवती।

४. कीदृशी सा।

रोषदारुणम्। अनुनीतं कृतसान्त्वनमिव॥ २०॥ **उर्वशी**। अपराद्धास्मि चिरकारिका महाराजस्य॥ **यदेवेति**। यदेव सुखं दुःखात्पीडोत्तरमुपनतं प्राप्तं तद्रसवत्तरं स्वादुतरं भवति। 'रसो रागे तथा वीर्ये तिक्तादौ पारदे द्रवे। रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः॥' इति वैजयन्ती। हि यतः। तरुच्छायानिर्वाणाय सुखाय। तप्तस्य विशेषतः अतिसुखायेत्यर्थः। 'निर्वाणं निर्वृतौ मोक्षे' इति त्रिकाण्डी॥२१॥ **विदूषकः**। भवति, सेविताः प्रदोषरमणीयाश्चन्द्रपादाः। तत्समयः खलु ते गेहप्रवेशस्य॥ **विदूषकः**। इत इतो भवति॥ **उर्वशी**। की-

राजा—

अनधिगतमनोरथस्य पूर्वं
शतगुणितेव गता मम त्रियामा ।
यदि तु तव समागमे तथैव
प्रसरति सुभ्रु ततः कृती भवेयम् ॥ २२ ॥

(इति निष्क्रान्ताः सर्वे ।)

## तृतीयोऽङ्कः ।

---

दृशी सा ॥ **अनधिगतेति** । अनधिगतमनोरथस्य अप्राप्तत्वत्समागमसुखाभिलाषस्य ॥ २२ ॥ **इति श्रीमद्यायजूकप्रवरश्रीश्रिम्बेकरोपनामकमौनिकुलालंकारश्रीरङ्गनाथदीक्षितकुक्षिजबिन्दुवृन्दपुरंदरश्रीबालकृष्णदीक्षिततनूद्भतरङ्गनाथविरचितायां विक्रमोर्वशीप्रकाशिकायां तृतीयाङ्कोन्मेषः ॥**



# चतुर्थोऽङ्कः ।

(नेपथ्ये सहजन्याचित्रलेखयोः प्रावेशिक्याक्षिप्तिका ।)

पिअसहिविओअविमणा सहिसहिआ व्वाउला समुल्लवइ ।
सूरकरफंसविअसिअतामरसे सरवरुच्छङ्गे ॥ १ ॥

(ततः प्रविशति सहजन्या चित्रलेखा च ।)

**चित्रलेखा**—(प्रवेशानन्तरं द्विपदिकया दिशोऽवलोक्य ।)

---

१. प्रियसखीवियोगविमनाः सखीसहिता व्याकुला समुल्लपति ।
सूर्यकरस्पर्शविकसिततामरसे सरोवरोत्सङ्गे ॥

मम स भविकाय भवताद्भवभयहन्ता हृतानार्यः ।
निजचरणसक्तभक्तप्रापितकामश्चिरं रामः ॥

सहजन्याचित्रलेखयोरुर्वशीसख्योः प्रवेशसूचकामाक्षिप्तिकाभिधां गीतिमुपक्षिपति—**पिअसहीति** । प्रियसखीवियोगविमनाः सखीसहिता व्याकुला समुल्लपति । सूर्यकरस्पर्शविकसिततामरसे सरोवरोत्सङ्गे ॥ सखीं सखीति वा । उर्वशीविरहदूनचेताः सहजन्योपेता विह्वला कासारोपान्तोपविष्टा चित्रलेखा विलपतीत्यर्थः । सखीं सहजन्यां प्रति सखी चित्रलेखा वदतीत्यर्थ इति वा । रविकरसंपर्कसंजातविकासरक्तसरोजवन्मत्सख्याः कदा नु भर्तृसंदर्शनादिजनितं सुखं संपत्स्यत इति सरोविशेषणध्वनिः । आक्षिप्तिकालक्षणमाह भरतः—'चञ्चत्पुटादितालेन मार्गत्रयविभूषिता । आक्षिप्तिका स्वरपदग्रथिता कथिता बुधैः ॥' इति । पात्रप्रवेश एवैतस्या निवेशः । गाथा छन्दः । तल्लक्षणं च पिङ्गले—'पढमं बारह मत्ता बीए अट्ठरहेण संजुत्ता । जह पढमं तह तीअं दहपञ्चविहूसिआ गाहा ॥' इति । दशपञ्चेत्यर्थाच्चतुर्थचरणे पञ्चदशमात्राविभूषिता भवतीत्यर्थः । विशेषान्तरं च तत्रैव—'सत्तगणादीहन्ता जो ण लहू छट्ठणेय जो विसमो । तह गाहे विइ अद्धे छट्ठं लहुअं विआणेहु ॥' इति । गणचतुष्कलः । प्राकृतपद्येन जगणः षष्ठः । छट्ठं लहुअमिति । एको लघुरेव षष्ठो गणः कार्य इत्यर्थः । विषमे जगणाभावः । अन्ते गुरुश्चात्राप्यावश्यक इति हृदयम् ॥ १ ॥ **द्विपदिकया दिशोऽवलोक्येति** । द्विपदिकाख्यगीतिविशेषेण दिगवलोकनं विधायाभिमां गाथां पठतीत्यर्थः । दिशोऽवलोक्य द्विपदिकाख्यगीत्या वदतीत्यर्थो वा । तल्लक्षणं चाह भगवान्भरतमुनिः—'शुद्धा खण्डा च मात्रा च संपूर्णेति चतुर्विधा । द्विपदी करणाख्येन तालेन परीगीयते ॥ पादे छः पञ्चभागोऽन्ते(?)न जौ षष्ठद्वितीयकौ । चतुर्भिरीदृशैः पादैः शुद्धा द्विपदिकोच्यते ॥ अर्धान्तेऽन्ये स्वरानाहुः खण्डा स्याच्छुद्धयार्धया । षष्ठेनैकेन

सहअरिदुक्खालिद्धअं सरवरअम्मि सिणिद्धअम् ।
वाहोवग्गिअणअणअं तम्मइ हंसीजुअलअम् ॥ २ ॥

**सहजन्या**—(सखेदम् ।) सहि चित्तलेहे, मिलाअमाणसतवत्तकसणा दे मुहच्छाआ हिअअस्स असत्थदं सूचेदि । ता कहेहि मे अणिव्विदिकारणं जेण दे समाणदुक्खा होमि ।

**चित्रलेखा**—सहि, अच्छरावावारपज्जाएण तत्तभअदो सुज्जस्स उवट्ठाणे वट्टन्ती पिअसहीए विणा बलिअं उक्कण्ठिदम्हि ।

**सहजन्या**—सहि, जाणामि वो अण्णोण्णगदं प्पेमम् । तदो तदो ।

१. सहचरीदुःखालीढं सरोवरे स्निग्धम् ।
बाष्पापवलितनयनं ताम्यति हंसीयुगलम् ॥

२. सखि चित्रलेखे, म्लायमानशतपत्रकृष्णा ते मुखच्छाया हृदयस्यास्वस्थतां सूचयति । तत्कथय मेऽनिर्वृतिकारणं येन ते समानदुःखा भवामि ।

३. सखि, अप्सरोव्यापारपर्यायेण तत्रभवतः सूर्यस्योपस्थाने वर्तमाना प्रियसख्या विना बलवदुत्कण्ठितास्मि ।

४. सखि, जानामि युवयोरन्योन्यगतं प्रेम । ततस्ततः ।

गुरुणा मात्राद्विपदिका मता ॥ ज्ञेया शुद्धेव संपूर्णा गुरुणान्तेऽधिकेन तु ॥' इति । हंसीयुगलान्योक्त्या स्वपीडातिशयं वर्णयति—**सहअरीति** । सहचरीदुःखालीढं सरोवरे स्निग्धम् । बाष्पापवलितनयनं ताम्यति हंसीयुगलम् ॥ अपवलितमुपप्लुतम् । ताम्यति ग्लानिं भजते ॥ २ ॥ **सहजन्या** । सखि चित्रलेखे, म्लायमानशतपत्रकृष्णा ते मुखच्छाया हृदयस्यास्वस्थतां सूचयति । तत्कथय मेऽनिर्वृतिकारणं येन ते समानदुःखा भवामि ॥ **चित्रलेखा** । सखि, अप्सरोव्यापारपर्यायेण तत्रभवतः सूर्यस्योपस्थाने वर्तमाना प्रियसख्या विना बलवदुत्कण्ठितास्मि । 'वसन्तोत्सव आगत इति बलवदुत्कण्ठितास्मि' इति पाठे तु वसन्तोत्सव आ सामस्त्येन गतः । आः गत इति वा पदच्छेदः । आः इति खेदे ॥ **सहजन्या** । सखि, जानामि युवयोरन्योन्यगतं प्रेम । ततस्ततः ॥ **चित्रलेखा** । तत एतेषु

**चित्रलेखा**—तदो[1] इमेसुं दिवसेसुं को णवो वुत्तन्तो वट्टदित्ति प्पणिधाणट्ठिदाए मए अच्चाहिदं उवलद्धम् ।

**सहजन्या**—सहि[2], कीरिसं तं ।

**चित्रलेखा**—(सकरुणम् ।) उव्वसी[3] किल राएसिं लच्छीसणाहं गेण्हिअ अमच्चेसु णिहिदकज्जधुरं केलाससिहरुद्देसं गन्धमादणवणं विहरिदुं गदा ।

**सहजन्या**—(सश्लाघम् ।) सहि[4], सो संभोओ जो तारिसेसु प्पदेसेसु तदो तदो ।

**चित्रलेखा**—तदो[5] तहिं मन्दाइणीतीरे सिकदापव्वतेहिं कीलमाणा उदअवती णाम विज्जाहरदारिआ तेण राएसिणा चिरं णिज्झाइदेत्ति कदुअ कुविदा मे पिअसही उव्वसी ।

---

१. तत एतेषु दिवसेषु को नवो वृत्तान्तो वर्तत इति प्रणिधानस्थितया मयात्याहितमुपलब्धम् ।

२. सखि, कीदृशं तत् ।

३. उर्वशी किल राजर्षिं लक्ष्मीसनाथं गृहीत्वामात्येषु निहितकार्यधुरं कैलासशिखरोद्देशं गन्धमादनवनं विहर्तुं गता ।

४. सखि, स संभोगो यस्तादृशेषु प्रदेशेषु । ततस्ततः ।

५. ततस्तत्र मन्दाकिनीतीरे सिकतापर्वतैः क्रीडमानोदयवती नाम विद्याधरदारिका तेन राजर्षिणा चिरं निध्यातेति कृत्वा कुपिता मे प्रियसख्युर्वशी ।

---

दिवसेषु को नवो वृत्तान्तो वर्तत इति प्रणिधानस्थितया मयात्याहितमुपलब्धम् । 'अत्याहितं तु जीवानपेक्षकृत्ये महाभये' इति विश्वलोचनः ॥ **सहजन्या** । सखि, कीदृशं तत् ॥ **चित्रलेखा** । उर्वशी किल राजर्षिं लक्ष्मीसनाथं गृहीत्वामात्येषु निहितकार्यधुरं कैलासशिखरोद्देशं गन्धमादनवनं विहर्तुं गता ॥ **सहजन्या** । सखि, स संभोगो यस्तादृशेषु प्रदेशेषु । ततस्ततः ॥ **चित्रलेखा** । ततस्तत्र मन्दाकिनीतीरे सिकतापर्वतैः क्रीडमानोदयवती नाम विद्याधरदारिका तेन

**सहजन्या**—[1]असहणा खु सा। दूरारूढो अ से प्पणओ। ता भविदव्वदा एत्थ बलवदी। तदो तदो।

**चित्रलेखा**—[2]तदो भत्तुणो अणुणअं अप्पडिवज्जमाणा गुरुसावसंमूढहिअआ विसुमरिददेवदाणिअमा अम्मकाजणपरिहरणिज्जं कुमारवणं पविट्ठा। पवेसाणन्तरं अ काणणोवन्तवत्तिलदाभावेण परिणदं से रूवम्।

**सहजन्या**—(सशोकम्।) [3]सव्वधा णत्थि विहिणो अलङ्घणीअं णाम। जेण तारिसस्स अण्णारिसो एव्व पलिणामो संवुत्तो। तदो तदो।

**चित्रलेखा**—[4]तदो सो वि तस्सिं एव्व काणणे पिअदमं अण्णेसअन्तो उम्मत्तीभूदो इदो उव्वसी तदो उव्वसी त्ति कदुअ

१. असहना खलु सा। दूरारूढश्चास्याः प्रणयः। तद्भवितव्यतात्र बलवती। ततस्ततः।

२. ततो भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम्।

३. सर्वथा नास्ति विधेरलङ्घनीयं नाम। येन तादृशस्यान्यादृश एव परिणामः संवृत्तः। ततस्ततः।

४. ततः सोऽपि तस्मिन्नेव कानने प्रियतमामन्विष्यन्नुन्मत्तीभूत इत उर्वशी तत उर्वशीति कृत्वाहोरात्रमतिवाहयति। अनेन पुन-

राजर्षिणा चिरं निध्यातेति कृत्वा कुपिता मे प्रियसख्युर्वशी। निध्यातावलोकिता॥ **सहजन्या**। असहना खलु सा। दूरारूढश्चास्याः प्रणयः। तद्भवितव्यतात्र बलवती। ततस्ततः॥ **चित्रलेखा**। ततो भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतमस्या रूपम्। अप्रतिपद्यमानास्वीकुर्वाणा। गुरुर्गरिष्ठो यः शापस्तेन। गुरुर्भरतमुनिस्तद्दत्तशापेन वा। अम्मकाशब्दो देशी स्त्रीवाचकः॥ **सहजन्या**। सर्वथा नास्ति विधेरलङ्घनीयं नाम। येन तादृशस्यान्यादृश एव परिणामः संवृत्तः। ततस्ततः॥ **चित्रलेखा**। ततः सोऽपि तस्मिन्नेव कानने प्रिय-

अहोरत्तं अदिवाहेदि। (नभोऽवलोक्य।) इमिणा उण णिव्विदाणं पि उक्कण्ठाकारिणा मेहोदएण अप्पदीआरो भविस्सदि त्ति तक्केमि।

(अनन्तरे जम्भलिका।)

[1]सहअरिदुक्खालिद्धअं सरवरअम्मि सिणिद्धअम्।
अविरलवाहजलोल्लअं तम्मइ हंसीजुअलअम्॥ ३॥

**सहजन्या**—[2]सहि, अत्थि कोवि समागमोवाओ।

**चित्रलेखा**—[3]गोरीचरणराअसंभवं संगममणिं वज्जिअ कुदो से समागमोवाओ।

**सहजन्या**—[4]ण तारिसा आकिदिविसेसा चिरं दुक्खभाइणो

निर्वृतानामप्युत्कण्ठाकारिणा मेघोदयेनाप्रतीकारो भविष्यतीति तर्कयामि।

१. सहचरीदुःखालीढं सरोवरे स्निग्धम्।
अविरलबाष्पजलार्द्रं ताम्यति हंसीयुगलम्॥

२. सखि, अस्ति कोऽपि समागमोपायः।

३. गौरीचरणरागसंभवं संगममणिं वर्जयित्वा कुतोऽस्याः समागमोपायः।

४. न तादृशा आकृतिविशेषाश्चिरं दुःखभाजो भवन्ति। तदवश्यं

---

तमामन्विष्यन्नुन्मत्तीभूत इत उर्वशी तत उर्वशीति कृत्वाहोरात्रमतिवाहयति। अनेन पुनर्निर्वृतानामप्युत्कण्ठाकारिणा मेघोदयेनाप्रतीकारो भविष्यतीति तर्कयामि॥ **अनन्तरे जम्भलिकेति**। जम्भलिका गीतिविशेषः। तथा चाह भरतः—'उद्ग्राहो द्विःसकृद्वैकखण्डो द्विःशकलोऽथवा। यत्र ध्रुवो द्विराभोगो ध्रुवे मुक्तिः स जम्भकः॥' इति। एतस्यैव नाम जम्भलिकेति मतङ्गमतम्। 'ध्रुवे मुक्तिरहिता पूर्वोक्तलक्षणलक्षिता सा' इति श्रीमद्भट्टसोमचरणाः। पुनः 'सहचरि' इत्येव पठति तृतीयचरणपरिवर्तनेन। अविरलवाहजलोल्लअं अविरलबाष्पजलार्द्रम्। ओल्लअमित्यार्द्रे देशी॥३॥ **सहजन्या**। सखि, अस्ति कोऽपि समागमोपायः। **चित्रलेखा**। गौरीचरणरागसंभवं संगममणि वर्जयित्वा कुतोऽस्याः समागमोपायः॥ **सहजन्या**। न तादृशा आकृतिविशेषाश्चिरं दुःखभाजो भवन्ति। तदवश्यं कोऽप्यनुग्रहनिमि-

होन्ति। ता अवस्सं कोवि अणुग्गहणिमित्तभूओ समागमोवाओ भविस्सदि त्ति तक्केमि। (प्राचीं दिशं विलोक्य।) ताएहि। उदआहिवस्स भअवदो सुज्जस्स उवट्ठाणं करेम्ह।

(अनन्तरे खण्डधारा।)

चिन्तादुम्मिअमाणसिआ सहअरिदंसणलालसिआ।
विअसिअकमलमनोहरए विहरइ हंसी सरवरए॥ ४॥

(इति निष्क्रान्ते।)

**प्रवेशकः।**

(नेपथ्ये पुरूरवसः प्रावेशिक्याक्षिप्तिका।)

गहणं गइन्दणाहो पिअविरहुम्माअपअलिअविआरो।
विसइ तरुकुसुमकिसलअभूसिअणिअदेहपब्भारो॥ ५॥

---

कोऽप्यनुग्रहनिमित्तभूतः समागमोपायो भविष्यतीति तर्कयामि। तदेहि। उदयाधिपस्य भगवतः सूर्यस्योपस्थानं कुर्वः।

१. चिन्तादूनमानसा सहचरीदर्शनलालसा।
विकसितकमलमनोहरे विहरति हंसी सरोवरे॥

२. गहनं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः।
विशति तरुकुसुमकिसलयभूषितनिजदेहप्राग्भारः॥

---

त्तभूतः समागमोपायो भविष्यतीति तर्कयामि। तदेहि। उदयाधिपस्य भगवतः सूर्यस्योपस्थानं कुर्वः। **खण्डधारेति**। खण्डधाराख्यो गीतिविशेषः। तल्लक्षणं तु—'यद्गीतं गुणकर्या च रागेण क्रीडकेन च। तालेन सा खण्डधारा यष्टिकेन प्रकाशिता॥' इति। हंसस्यान्यापदेशेन पुनः स्वावस्थामाह—**चिन्तेति**। चिन्तादूनितमानसा सहचरीदर्शनलालसा। विकसितकमलमनोहरे विहरति हंसी सरोवरे॥ ४॥ **प्रवेशक इति**। साहित्यदर्पणे—'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥' इति। अङ्कद्वयान्तरिति प्रथमाङ्केऽस्य निषेधः। शेषमिति। वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः संक्षिप्तार्थश्चेत्यर्थः। अत्र च विचारविशेषः पूर्वोक्तत्वात्पुनर्न लिखितः॥ गजान्योक्त्या जायाविरहायासितस्योन्मत्तस्य पुरूरवसो रङ्गभूमावाक्षिप्तिकया प्रवेशं सूचयति—**गहणमिति**। गहनं गजेन्द्रनाथः प्रियाविरहोन्मादप्रकटितविकारः। विशति तरुकुसुम-

(ततः प्रविशत्याकाशबद्धलक्ष्यः सोन्मादो राजा ।)

**राजा**—(सक्रोधम् ।) आः दुरात्मन् रक्षः, तिष्ठ तिष्ठ । क्व मे प्रियतमामादाय गच्छसि । (विलोक्य ।) हन्त, शैलशिखराद्गगनमुत्पत्य बाणैर्मामभिवर्षति । (लोष्टं गृहीत्वा हन्तुं धावन् । अनन्तरे द्विपदिकया दिशोऽवलोक्य ।)

हिअआहिअपिअदुक्खओ सरवरए धुदपक्खओ ।[1]
वाहोवग्गिअणअणओ तम्मइ हंसजुआणओ ॥ ६ ॥

(विभाव्य सकरुणम् ।) कथम् ।

नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया मम नोर्वशी ॥ ७ ॥

(इति मूर्च्छितः पतति । पुनर्द्विपदिकयोत्थाय निश्वस्य ।)

मेइ जाणिअ मिअलोअणि णिसिअरु कोइ हरेइ ।[2]
जाव णु णवतडिसामलि धाराहरु वरिसेइ ॥ ८ ॥

१. हृदयाहितप्रियादुःखः सरोवरे धुतपक्षः ।
व्याधापवल्गितनयनस्ताम्यति हंसयुवा ॥
२. मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति ।
यावन्नु नवतडिच्छ्यामलो धाराधरो वर्षति ॥

किसलयभूषितनिजदेहप्राग्भारः । देहप्राग्भारो देहाभोगः ॥ ५ ॥ हंसान्यापदेशेन राजा स्वदुःखातिरेकमाह—**हिअअ इति** । हृदयाहितप्रियादुःखः सरोवरे धुतपक्षः । व्याधापवल्गितनयनः, पक्षे बाष्पापवल्गितनयनः । ताम्यति हंसयुवा ॥ धुतपक्षः कम्पितपक्षः । पक्षेऽसहायः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति त्रिकाण्डी । व्याधत्रासितनेत्रः ॥ ६ ॥ **नवजलधर इति** । सोऽतिगर्वितः । निशाचरो राक्षसः । दूरमत्यन्तमाकृष्टम् । धारासारो वर्षप्रसरः । 'धारा संपातवर्षणे' इति विश्वलोचनः । 'आसारस्तु प्रसरणे' इति च सः ॥ ७ ॥ तडिद्विराजितं जलधरमुद्वीक्ष्याह—**मइ जाणिएति** । मया ज्ञातं मृगलोचनां निशाचरः कोऽपि हरति । यावन्नु नवतडिच्छ्यामलो धाराधरो वर्षति ॥ नुर्निश्चये । यावज्जलधरो

(इति सकरुणं विचिन्त्य ।) क्व नु खलु रम्भोरूर्गता स्यात् ।

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि हि न मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥ ९ ॥

(इति द्विपदिकया दिशोऽवलोक्य सास्रम् ।) अये, परावृत्तभागधेयानां दुःखं दुःखानुबन्धि । कुतः ।

अयमेकपदे तया वियोगः
प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभि-
र्भवितव्यं च निरातपत्वरम्यैः ॥ १० ॥

(अनन्तरे चर्चरी ।)

[1]जलहर संहरएहु कोपमिआढत्तओ
अविरलधारासारदिशामुहकन्तओ ।

१. जलधर संहरात्र कोपमाज्ञप्तः
अविरलधारासारदिशामुखकान्तः ।

वर्षति तावन्मृगलोचनामुर्वशीं कोऽपि राक्षसो हरतीति मया निश्चयेन ज्ञातम् । वर्षणोत्तरं तु जलदनिश्चयात्केन नीता क्व वा गता मत्प्राणप्रिया किमिदानीं करोमि मन्दभाग्य इति । इति क्वापि सकरुणं विचिन्त्येत्युत्तरचूर्णिकासंगतिः । 'मइ कोइ' इति च 'मया कोऽपि' इत्यर्थे देशी ॥ ८ ॥ **तिष्ठेदिति** । प्रभावपिहिता तिरस्करिण्यादिविद्याप्रभावेणाच्छन्ना। स्वर्गायेति स्वर्गं प्रति गन्तुमित्यर्थः । विधिः प्रकारः ॥९॥ **अयमिति** । एकपदे । 'तत्समैकपदे तुल्ये सद्यः सपदि च स्मृतम्' इति हलायुधः ॥ १० ॥ **अनन्तर इति** । चर्चरीसंज्ञो गीतिविशेषः । यदुक्तम्— 'द्रुतमध्यलयं समाश्रिता पठति प्रेमभरान्नटी यदि । प्रतिमण्ठकरासकेन वा द्रुतमध्या प्रथमा हि चर्चरी ॥' सोमो वा प्रतिमण्ठकः । 'लघ्वादितालो लोकेऽसौ रास इत्यभिधीयते ॥' इति ॥ मेघं प्रत्याह—**जलहरेति** । जलधर संहरात्र कोपमाज्ञप्तः अविरलधारासारदिशामुखकान्तः । ए अहं पृथ्वीं भ्रमन्यदि प्रियां प्रेक्षिष्ये तदा यद्यत्करिष्यसि तत्तत्सहिष्ये ॥ ए इति संबोधने' एवमर्थे वा ।'संहर, एहु, कोपम्'

ए मइं पुहविं भमन्ते जइ पिअं पेक्खिहिमि
तच्छे जं जु करीहसि तं तु सहीहिमि ॥ ११ ॥

(विहस्य ।) वृथा खलु मया मनसः संतापवृद्धिरुपेक्ष्यते । यदा मुनयोऽप्येवं व्याहरन्ति 'राजा कालस्य कारणम्' इति । तत्किमहं जलधरसमयं न प्रत्यादिशामि ।

(अनन्तरे चर्चरी ।)

गन्धुम्माइअमहुअरगीएहिं
वज्जन्तेहिं परहुअतूरेहिं ।
पसरिअपवणुव्वेल्लिअपल्लवणिअरु
सुललिअविविहपआरेहिं णच्चइ कप्पअरु ॥ १२ ॥

(इति नर्तित्वा ।) अथवा न प्रत्यादिशामि यत्प्रावृषेण्यैरेव चिह्नैर्मम राजोपचारः संप्रति । कथमिव ।

विद्युल्लेखाकनकरुचिरं श्रीवितानं ममाभ्रं
व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि ।

---

ए अहं पृथ्वीं भ्रमन्यदि प्रियां प्रेक्षिष्ये
तदा यद्यत्करिष्यसि तत्तत्सहिष्ये ॥

१. गन्धोन्मादितमधुकरगीतै-
र्वाद्यमानैः परभृततूर्यैः ।
प्रसृतपवनोद्वेल्लितपल्लवनिकरः
सुललितविविधप्रकारैर्नृत्यति कल्पतरुः ॥

इति पदत्रयम् । एहु एतस्मिन्मल्लक्षणे जने कोपं संहर । मा कुर्वित्यर्थः इति वा । 'मइं, तच्छे, जं जु' इत्यादयोऽहं, तदा, यद्यदित्यर्थे देशीशब्दाः ॥ ११ ॥ प्रत्यादिशामि निराकरोमि । 'प्रत्यादेशो निराकृतिः' इति त्रिकाण्डी । वसन्तवर्णनेन जलधरसमयप्रत्यादेशमाह—**गन्धुम्माइएति** । गन्धोन्मादितमधुकरगीतैर्वाद्यमानैः परभृततूर्यैः । प्रसृतपवनोद्वेल्लनशीलपल्लवनिकरः सुललितविविधप्रकारेण नृत्यति कल्पतरुः ॥ गीतैस्तूर्यैरित्युपलक्षणे तृतीया । प्रसृतेनेतस्ततः संचलता वायुनोद्वेल्लनशीलश्चञ्चलः पल्लवनिकरः किसलयसमूहो यस्य सः । एतेन पल्लवनिकरस्य करत्वं गम्यते ॥ १२ ॥ राजोपचारानेव वर्णयति—**विद्युल्लेखेति** । निचुलतरु-

घर्मच्छेदात्पटुतरगिरो बन्दिनो नीलकण्ठा
धारासारोपनयनपरा नैगमाश्चाम्बुवाहाः ॥ १३ ॥

(पुनश्चर्चरी ।) भवतु । किमेवं परिच्छदश्लाघया । यावदस्मिन्कानने तां प्रियामन्वेषयामि ।

(पाठस्यान्ते भिन्नकः ।)

दइआरहिओ अहिअं दुहिओ
विरहाणुगओ परिमन्थरओ ।
गिरिकाणणए कुसुमुज्जलए
गअजूहवई तह झीणगई ॥ १४ ॥

( अनन्तरे द्विपदिकया परिक्रम्यावलोक्य च सहर्षम् ।) हन्त हन्त, व्यवसितस्य मे संदीपनमिव संवृत्तम् । कुतः ।

---

१. दयितारहितोऽधिकं दुःखितो
विरहानुगतः परिमन्थरः ।
गिरिकानने कुसुमोज्ज्वले
गजयूथपतिस्तथा क्षीणगतिः ॥

भिर्वेतसाकारैर्हिज्जलापरनामभिर्द्रुमविशेषैः । 'निचुलस्तु निचोले स्यान्निचुलो हिज्जलद्रुमे । निर्माल्येऽप्यभ्रके क्लीबम्' इति विश्वलोचनः । घर्मच्छेदाद्ग्रीष्मसमयनाशात् । प्रावृट्प्रवृत्तेरित्यर्थः । 'घर्मः स्यादातपे ग्रीष्मे ऊष्मस्वेदलवेऽपि च' इति विश्वलोचनः । धारासारो वर्षप्रसरः । पक्षे धारारूपं सारं घनं तदानयनपराः । नैगमा वणिजः ।'धारा संपातवर्षणे सकले'। अपि च 'धारा पङ्क्तौ द्रवद्रव्यस्रवेऽश्वगतिपञ्चके' इति विश्वलोचनः । 'आसारस्तु प्रसरणे धारावृष्टौ सुहृद्बले' इति विश्वलोचनः । 'सारं न्याय्ये जले वित्ते' इत्यपि सः । 'नैगमः क्षुरवेदान्तवणिग्वाणिज्यनागरे' इति च सः ॥ १३ ॥ **पाठस्यान्ते भिन्नक इति** । 'पाठो वाद्याक्षरोत्करः' इति भरतः । भिन्नको रागविशेषः । तथा चाह भरतः—'षड्जमध्यमिकोत्पन्नो भिन्नको मध्यमो बहुः । षड्जग्रहांशो मन्यासो मन्द्रसोऽन्तोऽथवा भवेत् ॥ षड्जादिमूर्च्छनः शुद्धः संचारिणि सकाकलिः । प्रसन्नादियुतो दानवीरे रौद्रेऽद्भुते रसे ॥ दिनस्य पश्चिमे यामे प्रयोज्यः सोमदैवतः॥'इति ॥ गजान्योक्त्या स्वावस्थामाह—**दइआरहिओ इति** । दयितारहितोऽधिकं दुःखितो विरहानुगतः परिमन्थरः। गिरिकानने कुसुमोज्ज्वले गजयूथपतिस्तथा क्षीणगतिः ॥ भ्रमतीत्यध्याहारः । गजयूथपतिरहं स्वीयां प्रा-

आरक्तराजिभिरियं कुसुमैर्नवकन्दली सलिलगर्भैः ।
कोपादन्तर्बाष्पे स्मरयति मां लोचने तस्याः ॥ १५ ॥

इतो गतेति कथं नु मया तत्रभवती सूचयितव्या । यतः ।

पद्भ्यां स्पृशेद्वसुमतीं यदि सा सुगात्री
मेघाभिवृष्टसिकतासु वनस्थलीषु ।
पश्चान्नता गुरुनितम्बतया ततोऽस्या
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का ॥ १६ ॥

(द्विपदिकया परिक्रम्यावलोक्य च सहर्षम् ।) उपलब्धमुपलक्षणं येन तस्याः कोपनाया मार्गोऽनुमीयते ।

हृतोष्ठरागैर्नयनोदबिन्दुभि-
र्निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं
शुकोदरश्याममिदं स्तनांशुकम् ॥ १७ ॥

भवतु । आदास्ये तावत् । (परिक्रम्य विभाव्य च सास्रम् ।) कथं सेन्द्रगोपं नवशाद्वलमिदम् । तत्कुतोऽस्मिन्विपिने प्रियाप्रवृत्तिमागमयेयम् । (विलोक्य ।) अयमासारोच्छलितशैलतटस्थलीपाषाणमधिरूढः ।

आलोकयति पयोदान्प्रबलपुरोवातनर्तितशिखण्डः ।
केकागर्भेण शिखी दूरोन्नमितेन कण्ठेन ॥ १८ ॥

---

णप्रियामपि रक्षितुं न शक्तः । कथं मे यूथपतित्वं धिक् च मामित्यतिदुःखे कारणम् ॥ १४ ॥ **आरक्तराजीति** । शिलीन्ध्रापरनामा वृक्षविशेषः कन्दली । 'कलध्वनौ चापि तरौ मृगभेदेऽपि कन्दली' इति मुक्तावली ॥ १५ ॥ **पद्भ्यामिति** । वसुमतीं पृथ्वीम् । सुगात्री शोभनाङ्गी । मेघैरभिवृष्टाः कृताभिवर्षणाः सिकता वालुका यासु ॥ १६ ॥ **हृतोष्ठरागैरिति** । ओष्ठरागोऽधरारुणिमा । नयनोदबिन्दुभिरश्रुपृषतैः । निमग्ननाभेर्गम्भीरनाभेः । अङ्कितं चिह्नितम् । स्तनांशुकं कुचोपरिवस्त्रम् ॥ १७ ॥ **प्रियाप्रवृत्तिमिति** । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इति त्रिकाण्डी । आगमयेयं ज्ञास्यामि । आसारस्योच्छलितं यत्र । आसारो धारासंपातः ॥ **आलोकयतीति** । पुरोवातः प्राग्वायुः । शिखण्डो बर्हः । 'शिखण्डो बर्हचूडयोः' इति मुक्तावली । 'केका वाणी मयूरस्य' इत्यमरः । शिखी मयूरः ।

(उपेत्य।) भवतु। यावदेनं पृच्छामि।

(अनन्तरे खण्डकः।)

[1]संपत्तविसूरणओ तुरिअं परवारणओ।
पिअतमदंसणलालसओ गअवरु विम्हिअमाणसओ ॥ १९ ॥

(तेनाखण्डकान्तरे चर्चरी।)

[2]बंहिण पै इअ अब्भत्थिअम्मि आअक्खहि मं ता
एत्थ अरण्णे भमन्ते जइ तुइ दिट्ठी सा महु कान्ता।
णिसम्महि मिअङ्कसरिसे वअणे हंसगई
ए चिण्हे जाणिहिसि आअक्खिउ तुज्झ मई ॥ २० ॥

---

१. संप्राप्तखेदस्त्वरितं परवारणः।
प्रियतमादर्शनलालसो गजवरो विस्मितमानसः ॥

२. बर्हिण परमित्यभ्यर्थये आचक्ष्व मम ताम्
अत्रारण्ये भ्रमता यदि त्वया दृष्टा सा मम कान्ता।
निशामय मृगाङ्कसदृशेन वदनेन हंसगतिः
अनेन चिह्नेन ज्ञास्यस्याख्यातं तव मया ॥

'शिखावलः शिखी केकी' इत्यमरः ॥ १८ ॥ **अनन्तरे खण्डक इति**। खण्डको नीतिविशेषः। तल्लक्षणं तु—'विरहव्यापृता या तु पठेद्गीतिं कुशीलवी। प्राकृतेन प्रबन्धेन खण्डकः स उदाहृतः ॥' इति। गजान्यापदेशेन स्वावस्थां पुनराह—**संपत्तविसूरणेति**। संप्राप्तखेदत्वरितं परवारणः। प्रियतमादर्शनलालसो गजवरो विस्मितमानसः ॥ विचरतीति शेषः। परबलदलनोऽप्यहं स्वप्रियतमासंरक्षणेऽपि क्षमो नास्मीति खेदे विस्मये च हेतुगर्भे विशेषणं परवारण इति। विसूरण इति 'खिदेर्विसूरः' इति विसूरादेशः ॥१९॥ **तेना खण्डकान्तरे चर्चरीति**। तेनेति मङ्गलार्थकमक्षरद्वयम्। तेनकलक्षणमाह भगवान्भरतमुनिः—'ॐ तत्सदिति निर्देशात्तत्त्वमस्यादिवाक्यतः। तदिति ब्रह्म तेनायं ब्रह्मणा मङ्गलात्मकः ॥ लक्षितस्तेन तेना' इति। अन्यत्रापि—'तेकारः शंकरः प्रोक्तो नाकारश्च उमा तथा। गीतादौ तेन वक्तव्यं तेना इत्यक्षरद्वयम् ॥' इति। खण्डकचर्चर्योर्लक्षणं प्रागुक्तमेव। बर्हिणं प्रत्याह—**बंहिण पै इति**। बर्हिण पै परम्। त्वामिति वा। इत्यभ्यर्थये आचक्ष्व मम तामत्रारण्ये भ्रमता यदि त्वया दृष्टा सा मम कान्ता। निशामय मृगाङ्कसदृशेन वदनेन हंसगतिः।'ए अनेन चिह्नेन ज्ञास्यस्याख्यातं तव मया ॥ 'आअक्खहि

(चर्चरिकयोपविश्य । अञ्जलिं बद्ध्वा ।)

नीलकण्ठ ममोत्कण्ठा वनेऽस्मिन्वनिता त्वया ।
दीर्घापाङ्गा सितापाङ्ग दृष्टा दृष्टिक्षमा भवेत् ॥ २१ ॥

(चर्चरिकया विलोक्य ।) कथमदत्त्वैव प्रतिवचनं नर्तितुं प्रवृत्तः । किं नु खलु हर्षकारणमस्य । (विचिन्त्य ।) आं, ज्ञातम् ।

मृदुपवनविभिन्नो मत्प्रियाया विनाशा-
द्घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविगलितबन्धे केशहस्ते सुकेश्याः
सति कुसुमसनाथे किं करोत्येष बर्ही ॥ २२ ॥

भवतु । परव्यसनसुखितं न पुनरेनं पृच्छामि । (द्विपदिकया दिशोऽवलोक्य ।) अये, इयमातपान्तसंधुक्षितमदा जम्बूविटपमध्यास्ते परभृता । विहगेषु पण्डितैषा जातिः । यावदेनां पृच्छामि ।

---

मं ता । अथ वण भमन्ते' इत्यपि क्वचित्पाठः । निशामय शृणु । पाठान्तरे—'आचक्ष्व मां ताम् । अथ वने भ्रमता ।' मां प्रति तामाचक्ष्वेत्यर्थः । वदनेनेत्युपलक्षणे तृतीया ॥ २० ॥ चर्चरिकयोपविश्येत्यादौ चर्चरिका गतिविशेषः, तालविशेषो वा । बभाण च भरतः—'विरामान्तद्रुमद्वन्द्वं लघुन्यष्टौ च चर्चरी' इति । यथा—'०० । ऽ । । । । । । । ।' 'अञ्जलिं बद्ध्वेति । यदुक्तम्—'पताकाहस्ततलयोः संश्लेषादञ्जलिर्मतः । देवतागुरुविप्राणां नमस्कारेष्वयं क्रमात् ॥ कार्यः शिरोमुखोरःस्थो नृभिः स्त्रीभिर्यथेष्टतः ॥' इति ॥ **नीलकण्ठेति** । सितापाङ्ग धवलदृगन्त नीलकण्ठ मयूर । अस्मिन्वने दीर्घापाङ्गा आकर्णपूर्णनयनान्ता । दृष्टिक्षमा दृष्टौ दर्शने क्षमा यस्याः सा । नेत्रव्यापारेणैव यदीया क्षान्तिरुन्नीयत इति भावः । अथवा दृष्टिक्षमा दर्शनयोग्या । 'दिष्टिक्षमा' इत्यपि क्वचित्पाठः । तत्पक्षे दिष्टिं कालं क्षमते सा । जीवन्तीत्यर्थः । दृष्टा भवेदिति ममोत्कण्ठास्ति । इत्यस्ती अध्याहार्यौ । मद्वियोगेन प्रायस्तस्या जीवनं न संभाव्यत एवेति भावः । 'दिष्टिर्मुदि परीमाणे दिष्टिः कालोपदिष्टयोः । दिष्टं भाग्येऽथ दृष्टिः स्यान्नेत्रदर्शनबुद्धिषु ॥' इति विश्वलोचनः ॥२१॥ **मृदुपवनेति** । कलापः पिच्छभारः । 'कलापः संहते बर्हे काञ्च्यादौ तूणवृन्दयोः' इति विश्वलोचनः । अत्र च विनाशशब्दोऽमङ्गलव्यञ्जकत्वादश्लील इति प्रकाशकृदप्रकाशयदिदं पद्यं पददोषेषु । तत्र पूर्वश्लोके दिष्टिक्षमेत्यत्र जीवितसंदेहस्योक्तत्वात्कथमदत्त्वैव प्रतिवचनमित्यत्र प्रतिवचनाप्रदानपुरःसरं नर्तनारम्भाज्जीवितसंदेहस्य तावदवस्थानादेतस्मिन्नेव च पद्ये 'निःसपत्नोऽस्य जातः' इति सिद्धवदुक्तत्वाद्भ्रंशश्चोन्मादातिशयरूपप्रकृष्टतरकारणवशाद्विप्रलम्भपोषकृदेवैतत्पदमिति न कश्चि-

(अनन्तरे खुरकः।)

विज्जज्झरकाणणलीणओ
दुक्खविणिग्गहबाहुप्पीडओ।
दूरोसारिअहिअआणन्दओ
अम्बरमाणे भमइ गइन्दओ॥ २३॥

(खुरकान्ते चर्चरी।)

हेल्ले हेले,

परहुअ महुरपलाविणि कन्ती
णन्दणवण सच्छन्द भमन्ती।
जइं पइं पिअअम सा महु दिट्ठी
ता आअक्खहि महु परपुट्ठी॥ २४॥

१. विद्याधरकाननलीनो
दुःखविनिर्गतबाष्पोत्पीडः।
दूरोत्सारितहृदयानन्दः
अम्बरमानेन भ्रमति गजेन्द्रः।

२. परभृते मधुरप्रलापिनि कान्ते
नन्दनवने स्वच्छन्दं भ्रमन्ती।
यदि परं प्रियतमा सा मम दृष्टा
तदाचक्ष्व मम परपुष्टे।

त्तदुक्तदोषलेशावकाश इति प्रतिभाति॥ २२॥ **अनन्तरे खुरक इति**। खुरको नृत्यविशेषः। तदुक्तम्—'पटमञ्जरिरागसंयुतं यद्द्रुतमध्येन लयेन यत्प्रयुक्तम्। प्रतितालयुतं च नर्तनं तत्खुरकाख्यं मुनये शिवेन दत्तम्॥' 'लघुद्रुतद्वयं यत्र प्रतितालः प्रकीर्तितः' इति। खुरकाख्यो गेयविशेषो वा। आह च भरतः—'पूर्वपूर्वाक्षरत्यागे योऽन्यो वर्णचयः स चेत्। उत्तरोत्तरसंघादौ खुरकः परिकीर्तितः॥' इति। गजान्यापदेशेन पुनः स्वावस्थामाह—**विज्जज्झरेति**। विद्याधरकाननलीनो दुःखविनिर्गतबाष्पोत्पीडः। दूरोत्सारितहृदयानन्दोऽम्बरमानेन भ्रमति गजेन्द्रः॥ अम्बरमानेनेत्युपलक्षणे तृतीया। अतिविशाल इत्यर्थः॥ २३॥ परभृतां प्रत्याह—हेल्ले हेले हेरे हेरे। **परहुएति**। परभृते मधुरप्रलापिनि कान्ते नन्दनवने स्वच्छन्दं भ्रमन्ती। भवत्या इति शेषः। यदि परं प्रियतमा सा मम दृष्टा तदाचक्ष्व मयि परपुष्टे॥ आदरे द्विरुक्तिः। संबोधने मधुरप्रलापिनि। कान्ता मनोनयनानन्ददायिनी। नन्दनवने स्वच्छन्दं भ्रमन्तीत्यादीनि प्रियतमाविशेषणानि

(एतदेव नर्तित्वा वलन्तिकयोपसृत्य जानुभ्यां स्थित्वा ।) भवति,

त्वां कामिनो मदनदूतिमुदाहरन्ति
मानावभङ्गनिपुणं त्वममोघमस्त्रम् ।
तामानय प्रियतमां मम वा समीपं
मां वा नयाशु कलभाषिणि यत्र कान्ता ॥ २५ ॥

(वामकेन किंचिद्वलित्वा । आकाशे ।) किमाह भवती । कथं त्वामेवमनुरक्तं विहाय गतेति । शृणोतु भवती ।

कुपिता नु न कोपकारणं
सकृदप्यात्मगतं स्मराम्यहम् ।
प्रभुता रमणेषु योषितां
नहि भावस्खलितान्यपेक्षते ॥ २६ ॥

(ससंभ्रमपुपविश्य अनन्तरं जानुभ्यां स्थित्वा 'कुपिता' इति पठित्वा विलोक्य च।) कथं कथाविच्छेदकारिणी स्वकार्य एव व्यासक्ता ।

महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिनवपाकं राजजम्बूद्रुमस्य ॥ २७ ॥

---

वा । 'परभृते परपुष्टे' इत्यर्थपौनरुक्त्यं वक्तुरुन्मत्तत्वान्न दोषावहम् । यद्वा 'मधुपरपुष्टे'इत्येकं पदम् । मधुना पुष्परसेन परमत्यन्तं पुष्टे इत्यर्थः । मधुपरा चासौ पुष्टेति वा, मधौ वसन्त इति वा ॥ २४ ॥ **वलन्तिकयेति** । वलन्तिका रागविशेषः । तथा च संगीतरत्नाकरे—'वलन्तिका तदुपाङ्गं स्याद्रिहीना मन्द्रदेवता । संन्यासांशग्रहेहायां शृङ्गारे शार्ङ्गिणोदिता ॥' इति ॥ **त्वामिति** । मदनस्य मन्मथस्य दूतिमुदाहरन्ति वदन्ति । 'दूति दूती च दूतिका' इति रूपचिन्तामणिः ॥ २५ ॥ **वामकेन किंचिद्वलित्वेति** । वामकं पार्श्वस्थितवस्त्ववलोकने संस्थानविशेषः । यदुक्तम्—'धुतेन शिरसा यत्तु पार्श्वेन वलितेन च । तद्वामकं वै करणं पार्श्वस्थस्यावलोकने ॥' इति ॥ **आकाश इति** । 'किं ब्रवीष्येवमित्यादि विनापात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येतत्तत्स्यादाकाशभाषितम् ॥' इति दशरूपकादौ । **कुपितेति** । नुर्वितर्के । हि यतः । रमणेषु प्रियेषु योषितां स्त्रीणां प्रभुता प्रभुत्वं भावस्खलितान्यभिप्रायस्खलितानि नापेक्षते नेच्छति । अभिप्रायस्याप्यन्यथाभावे ताः कुप्यन्ति किमुतान्यथाचरण इति भावः ॥ २६ ॥ **महदपीति** । लोकाः हि महदपि परकीयं दुःखं कष्टं शीतलमिति यद्वदन्ति तत्सम्यक् । समीचीन-

तदेवंगतेऽपि प्रियेव मे मञ्जुस्वनेति न मे कोपोऽस्याम् । सुखमास्तां भवती । साधयामस्तावत् । (उत्थाय द्विपदिकया परिक्रम्यावलोक्य च ।) अये, दक्षिणेन वनधारां प्रियाचरणनिक्षेपशंसी नूपुरशब्दः । यावदेनमनुगच्छामि । (परिक्रम्य ।)

पिँअअमविरहकिलामिअवअणओ
 अविरलवाहजलाउलणअणओ ।
दूसहदुक्खविसंठुलगमनओ
 पसरिअगुरुतावदिविअङ्गओ ।
अहिअं दुम्मिअमाणसअओ दरिअं गओ
 काणणं परिभमइ गइन्दओ ॥ २८ ॥

(इति ककुभेन षड्डुपभङ्गाः ।)

---

१. प्रियतमाविरहक्लान्तवदनः
 अविरलबाष्पजलाकुलनयनः ।
दुःसहदुःखविसंष्ठुलगमनः
 प्रसृतगुरुतापदीप्ताङ्गः ।
अधिकं दूनमानसो दरीं गतः
 कानने परिभ्रमति गजेन्द्रः ॥

---

मित्यर्थः । राजजम्बूद्रुमस्य तत्संज्ञकवृक्षस्य । 'राजजम्बूर्महाफला' इति त्रिकाण्डी ॥ २७ ॥ **दक्षिणेन वनधारामिति** । वनधाराया दक्षिणभागे । धारा पङ्क्तिः दक्षिणेनेत्येनप्प्रत्ययान्तो निपातः । तद्योगे च वनधारामिति द्वितीया । 'धारा पङ्क्तौ द्रवद्रव्यस्रवेऽश्वगतिपञ्चके' इति विश्वलोचनः । द्विपान्यापदेशेन स्वदुःखातिरेकमाह—**पिअअमविरहेति** । प्रियतमाविरहक्लान्तवदनोऽविरलबाष्पजलाकुलनयनः । दुःसहदुःखविसंष्ठुलगमनः प्रसृतगुरुतापदीप्ताङ्गः । अधिकं दूनमानसो दरीं गतः कानने परिभ्रमति गजेन्द्रः । विसंष्ठुलगमनः स्खलद्गतिः ॥ २८ ॥ **ककुभेन षड्डुपभङ्गा इति** । ककुभाख्यरागेण । उक्तं च भरतेन—'मध्यमापञ्चमीधैवत्युद्भवः ककुभो भवेत् । धांशग्रहः पञ्चमान्तो धैवतादिकमूर्च्छनः ॥ प्रसन्नमध्यारोहिभ्यां करुणे यमदैवतः । गेयः शरदि' इति । उपभङ्गा अवच्छेदाः ॥ उन्मादातिशयव-

(अनन्तरे द्विपदिकया दिशोऽवलोक्य ।)

पिअकरिणीविच्छोइअओ गुरुसोआणलदीविअओ ।
बाहजलाउललोअणओ करिवरु भमइ समाउलओ ॥ २९ ॥

(सकरुणम् ।) हा धिक् कष्टम् ।

मेघश्यामा दिशो दृष्ट्वा मानसोत्सुकचेतसा ।
कूजितं राजहंसेन नेदं नूपुरशिञ्जितम् ॥ ३० ॥

भवतु । यावदेते मानसोत्सुकाः पतत्रिणः सरसोऽस्मान्नोत्पतन्ति तावदेतेभ्यः प्रियाप्रवृत्तिरवगमयितव्या । (वलन्तिकयोपसृत्य ।) अहो जलविहङ्गमराज,

पश्चात्सरः प्रतिगमिष्यसि मानसं त्वं
पाथेयमुत्सृज बिसं ग्रहणाय भूयः ।
मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात्सतां गुरुतरा प्रणयिक्रियैव ॥ ३१ ॥

(पथोन्मुखो विलोकयति ।) मानसोत्सुकेन मया न लक्षितेत्येवं वचनमाह ।

---

१. प्रियकारिणीवियुक्तो गुरुशोकानलदीप्तः ।
बाष्पजलाकुललोचनः करिवरो भ्रमति समाकुलः ॥

---

शात्पुनस्तमेवार्थमाह–**पिअकरिणीति** । प्रियकरिणीवियुक्तो गुरुशोकानलदीप्तः । बाष्पजलाकुललोचनः करिवरो भ्रमति समाकुलः ॥ विच्छोइअओ इति वियुक्ते देशी ॥२९॥**मेघश्यामा इति** । मानसाय सरसे उत्सुकमुत्कण्ठितं चेतोऽन्तःकरणं यस्य । नूपुरं मञ्जीरम् । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इति त्रिकाण्डी । शिञ्जितं ध्वनिः । 'भूषणानां तु शिञ्जितम्' इति च सा ॥ ३० ॥ **पश्चादिति** । भूयो ग्रहणाय बिसरूपं पाथेयम् । पथिषु साधु पाथेयम् । सिद्धान्नमुत्सृज कुत्रचिन्निधेहि । दयितोदन्तकथनेन मां तावदादौ शुचः शोकादुद्धर । पश्चात्त्वया पाथेयं ग्राह्यमित्यर्थः ॥३१॥

(उपविश्य चर्चरी ।)

रे[1] रे हंसा किं गोइज्जइ

(इति नर्तित्वा उत्थाय ।)

यदि हंस गता न ते नतभ्रूः
सरसो रोधसि दृक्पथं प्रिया मे ।
मदखेलपदं कथं नु तस्याः
सकलं चोरगतं त्वया गृहीतम् ॥ ३२ ॥

(चर्चरी ।)

[2]गइअणुसारे मइ लक्खिज्जइ ।

(चर्चरिकयोपसृत्याञ्जलिं बद्ध्वा ।)

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥ ३३ ॥

(पुनश्चर्चरी ।)

[3]कइं पइं सिक्खिउ ए गइलालस
सा पइं दिट्ठी जहणभरालसा ॥ ३४ ॥

---

१. रे रे हंस किं गोप्यते ।
२. गत्यनुसारेण मया लक्ष्यते ।
३. कस्मात्त्वया शिक्षितमेतद्गतिलालस
सा परं दृष्टा जघनभरालसा ॥

---

हंसं प्रत्याह—**रे रे इति** । रे रे हंस किं गोप्यते ॥ **यदि हंसेति** । सरसः सरोवरस्य । 'कासारः सरसी सरः' इति त्रिकाण्डी । रोधसि तटे । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इति त्रिकाण्डी । दृक्पथं दृग्गोचरम् । मदेन खेला कामक्रीडा येषु । 'क्रीडा खेला च कूर्दनम्' इति सा ॥ ३२ ॥ **गइअण्विति** । गत्यनुसारेण मया लक्ष्यते ॥ **हंस प्रयच्छेति** । यत इत्यध्याहृत्य । अस्या मत्प्रियायाः । यद्यस्मात् । गतिर्गमनं त्वया हृता नीता । विभावितो दृष्टः । एकदेशश्चोरितद्रव्यांशो यस्मिन्नेतादृशेन चौरेण । यदभियुज्यते स्वामिना चोरे चोरितत्वेनारोप्यते तत्तेन देयम् ॥ ३३ ॥ **रे रे हंस इति** । रे रे हंस, किं गोप्यते गत्यनुसारेण मया लक्ष्यते । कस्मात्त्वया शिक्षितमेतद्गतिलालस सा परं दृष्टा जघनभरालसा ॥ हे गतिलालस गतौ गमनविषये लालसाभिलाषो यस्य । त्वयैतत्, अर्थाद्गमनम्, कस्माच्छिक्षितम् । गमनान्यथानुपपत्त्यैव सा परं निश्चितं त्वया दृष्टा । यद्वा ए गइलालस इति पदद्वयम् । लालसार्थाद्गतिशिक्षणे साभिलाष । चेदियं

(पुनश्चर्चरी । 'हंस प्रयच्छ' इत्यादि पठित्वा द्विपदिकया निरूप्य । विहस्य ।) एष स्तेनानुशासी राजेति भयादुत्पतितः । यावदन्यमवकाशमवगाहिष्ये । (द्विपदिकया परिक्रम्यावलोक्य ।) अये, प्रियासहायश्चक्रवाकस्तिष्ठति । तावदेनं पृच्छामि ।

(अनन्तरे कुटिलिका ।)

मम्मररणिअमणोहरए[1]

(मल्लघटी ।)

कुसुमिअतरुवरपल्लविए[2] ।

(चर्चरी ।)

दइआविरहुम्माइअओ[3]
काणणे भमइ गइन्दओ ॥ ३५ ॥

(द्विलयान्तरे चर्चरी ।)

१. मर्मररणितमनोहरे
२. कुसुमिततरुवरपल्लविते ।
३. दयिताविरहोन्मादितः
काननं भ्रमति गजेन्द्रः ॥

त्वया न दृष्टा तर्ह्येतद्गतिरेतस्या मत्प्राणप्रियाया गतिर्गमनं कंइ कथं शिक्षितम् । अभ्यस्तमित्यर्थः । कंइ केन शिक्षितमुपदिष्टमिति वा । एतद्गतिलास्यमित्यपि केचित् । अर्थापत्त्यैव त्वत्कृतैतद्दर्शनमवधार्यत इति तात्पर्यार्थः । 'कंइ' इति देशी संबोधने बहुवचनम् । अग्रे च त्वयेत्येकवचनमुन्मत्तोक्तेर्न दोषकृत् । वस्तुतस्तु दूरादाह्वाने हंसा इति प्लुतान्तत्वादेकवचनमेव ॥ ३४ ॥ **एष स्तेनेति** । स्तेनश्चौरः । 'स्यादेकागारिकः स्तेनः' इति त्रिकाण्डी ॥ **अनन्तरे कुटिलिकेति** । कुटिलिका नाट्यविशेषः । यदुक्तम्—'रागेण रहितं यत्तु अर्धमत्तलिकायुतम् । भाषयैव च तन्नाट्यं कुटिलीसंज्ञकं मतम् ॥' अर्धमत्तली लक्षणं तु—'उपेतापसृतौ पादौ वामश्चेद्रेचितः करः । कट्यामन्यस्तदा त्वर्धमत्तलीतरुणे मदे ॥' इति । गजान्योक्त्या पुनराह—**मम्मर इति** ।......। मर्मरः शुष्कपर्णध्वनिरिति यद्यपि, तथापि विशिष्टवाचकानां पदानां विशेषणवाचकपदसांनिध्ये सति विशेष्यमात्रपरत्वमित्यभियुक्तोक्तेः शुष्कपत्रमात्रपरोऽयं मर्मरशब्दः । यद्वा मर्मरः स्वरश्च रणितं च पक्ष्यादीनां ताभ्यां मनोहरे ॥ **मल्लघटीति** । मल्लघटी नाट्यविशेषः ॥ **द्विलयान्तरे चर्चरीति** । नृत्यगीतवाद्यानां साम्यं लयः ।

[1]गोरोअणाकुङ्कुमवण्णा चक्क भणइ मइ ।
महुवासर कीलन्ती धणिआ ण दिट्ठी तुइ ॥ ३६ ॥

(चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा ।)

रथाङ्ग नाम वियुतो रथाङ्गश्रोणिबिम्बया ।
अयं त्वां पृच्छति रथी मनोरथशतैर्वृतः ॥ ३७ ॥

कथं कः क इत्याह । मा तावत् । न खलु विदितोऽहमस्य ।

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥ ३८ ॥

कथं तूष्णीं स्थितः । भवतु । उपालभे तावदेनम् । (जानुभ्यां स्थित्वा ।) तद्युक्तं तावदात्मानुमानेन वर्तितुम् । कुतः ।

सरसि नलिनीपत्त्रेणापि त्वमावृतविग्रहां
ननु सहचरीं दूरे मत्वा विरौषि समुत्सुकः ।
इति च भवतो जायास्नेहात्पृथक्स्थितिभीरुता
मयि च विधुरे भावः कोऽयं प्रवृत्तिपराङ्मुखः ॥ ३९ ॥

---

१. गोरोचनाकुङ्कुमवर्ण चक्र भण माम् ।
मधुवासरे क्रीडन्ती धन्या न दृष्टा त्वया ॥

---

'लयः साम्यम्' इत्यमरः । तस्य च त्रैविध्यमुक्तमन्यत्र—'द्रुतो मध्यो विलम्बश्च लयः स त्रिविधो मतः' इति ॥ ३५ ॥ चक्रवाकीमाह—**गोरोअणेति** । चक्का चक्रवाकी । 'कोकश्चक्रश्चक्रवाकः' इति त्रिकाण्डी ॥ ३६ ॥ **रथाङ्गेति** । नामेति संभावनायाम् । 'हे रथाङ्गनामन्' इति तु पाठः साधीयान् । रथाङ्गवच्छ्रोणिबिम्बं यस्यास्तया चक्राकारश्रोणिमण्डलया प्रियतमया संत्यक्तः । 'बिम्बोऽस्त्री मण्डलं त्रिषु' इति त्रिकाण्डी । रथी रथवान्महारथो वा । अभिलाषशतैर्युक्तोऽयं राजा त्वां पृच्छति । तदुत्तरं देहीत्यर्थः ॥ ३७ ॥ **सूर्याचन्द्रमसाविति** । यस्य मम सूर्याचन्द्रमसावुष्णरश्मिशीतरश्मी मातामहपितामहौ । कृतयुगादौ सूर्यनप्ता मनोः पुत्रः सुद्युम्नापरनामा इलो नाम राजा मृगयासङ्गाद्धरनिवारितमुमावनमेकाकी प्रविष्टमात्रः स्त्री बभूव । तामेकाकिनीं सुन्दरीं दृष्ट्वा बुधः कामातुरः सन्नाश्रमं नीत्वा तस्यां पुरूरवसं पुत्रमजीजनत्—इति भविष्योत्तरपुराणकथाप्रथा ॥ ३८ ॥ **सरसीति** । 'सरसी तु सरोवरम्' इत्यमरः । नलिनी कमलिनी । आवृतविग्रहामाच्छादिततनुम् । 'विग्रहः समरे काये' इति स एव । सहचरीं स्त्रियम् । विरौषि शब्दं करोषि । जाया

(उपविश्य।) सर्वथा मदीयानां भाग्यविपर्ययाणामयं प्रभावः । यावदन्यमवकाशमवगाहिष्ये । (द्विपदिकया परिक्रम्यावलोक्य च।) अये,

इदं रुणद्धि मां पद्ममन्तःक्वणितषट्पदम् ।
मया दष्टाधरं तस्याः ससीत्कारमिवाननम् ॥ ४० ॥

इतोगतस्यानुशयो मा भूदित्यस्मिन्नपि कमलसेविनि भ्रमरे प्रणयं करिष्ये ।

(अस्यान्तरे अर्धद्विचतुरस्रकः।)

ऍक्कक्कमवड्ढिअगुरुअरपेम्मरसे ।
सरे हंसजुआणओ कीलइ कामरसे ॥ ४१ ॥

---

१. एकक्रमवर्धितगुरुतरप्रेमरसे ।
सरसि हंसयुवा क्रीडति कामरसे

स्त्री । पृथक्स्थितिर्भिन्नावस्थानं तेन भीरुता भयशीलत्वम् । विधुरे विरहिते । भावोऽभिप्रायः । प्रवृत्तिपराङ्मुखो वार्ताविमुखः ।'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इति त्रिकाण्डी ॥३९॥ **इदमिति** । रुणद्धि अग्रे गन्तुं न प्रयच्छति । क्वणिताः शब्दायमानाः षट्पदा भ्रमराः । सीत्कारः कष्टाभिव्यञ्जकदन्तघटनाजनितशब्दानुकरणम् ॥ ४० ॥ **अर्धद्विचतुरस्रक इति** । नन्द्यावर्तापरनामकः संस्थानविशेषोऽर्धचतुरस्रकः । स च द्विवारं कृतत्वादर्धद्विचतुरस्रक इत्युच्यते । लक्षणं तु—'अस्यैव चेच्चरणयोरन्तरं स्यात्षडङ्गुलम् । वितस्तिमात्रमथवा नन्द्यावर्तं तदुच्यते ॥' इति । अस्यैवेति प्रकृतसंस्थानस्येत्यर्थः । अयमेव चार्धचतुरस्रक इत्याहुः । 'कमलसेविनि भ्रमरे प्रणयं करिष्ये' इत्युपक्रम्यानन्तरं दृष्टं हंसं वर्णयति-**एक्कक्कमेति** । 'सरे' इति पदविहीनो वा पाठः । एकक्रमवर्धितगुरुतरप्रेमरसे । सरसि हंसयुवा क्रीडति कामरसेन॥कामाभिनिवेशेनेत्यर्थः । यद्वा उन्मादातिशयवशेन भ्रमरमेव हंसबुद्ध्या वर्णयति-एक्केति । अथवा हंसान्योक्त्या स्वावस्थामाह—एक्केति । एकक्रमवर्धितगुरुतरप्रेमरसः । शरेण हंसयुवा नावक्रीडति कामरसेन॥कामस्य रसोऽभिनिवेशो यस्मिन्नेतादृशेन शरेण विद्ध इति शेषः । एकक्रमेण युगपद्वर्धितश्छिन्नः । प्रियाविरहेणेति भावः । गुरुतरः प्रेमरसो यस्यैतादृशो हंसयुवा नावक्रीडति । ईषत्क्रीडामपि न करोतीत्यर्थः । यद्वा । हंसजुआणओ इत्येकमेव पदम् । कुसुमसायकसायकाभितप्तः प्रियाविच्छेदच्छिन्नप्रेमा हंसयुवा क्रीडतीति शिरश्चालनेऽपि तु कथमपि क्रीडालेशमपि न करोतीति भावः।'वृधू छेदने' इति धातुः । 'निर्गतसरे' इति पाठान्तरे कामरसेन कामाभिनि-

(चतुरस्रकेणोपेत्याञ्जलिं बद्ध्वा ।)

मधुकर मदिराक्ष्याः शंस तस्याः प्रवृत्तिं
वरतनुरथ वासौ नैव दृष्टा त्वया मे ।
यदि सुरभिमवाप्स्यस्तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत्पुण्डरीके किमस्मिन् ॥ ४२ ॥

(इति द्विपदिकया परिक्रम्यावलोक्य च ।) अये, करिणीसहायो नागाधिराजो नीपस्कन्धनिषण्णस्तिष्ठति । यावदेनं गच्छामि ।

(कुलिका ।)

[1]करिणीविरहसंताविओ ।

(मन्दघटी ।)

[2]काणणे गन्धुद्धुअमहुअरु ॥ ४३ ॥

(अतोऽन्तरे विलोक्य ।) अथवा न तावदयमुपसर्पणकालः ।

अयमचिरोद्गतपल्लवमुपनीतं प्रियतमाग्रहस्तेन ।
अभिलेढु तावदासवसुरभिरसं शल्लकीभङ्गम् ॥ ४४ ॥

१. करिणीविरहसंतापितः ।
२ कानने गन्धोद्धतमधुकरः ॥

वेशेन । उपलक्षित इति शेषः । यद्वा व्यतिरेकदृष्टान्तेन योज्येयं गीतिः । कामरसेन युगपदुत्पादितगुरुतरप्रेमरसो हंसयुवा क्रीडति । अहं तु दैवदग्धो न तथेति भावः । पेम्मरसे, सरे, कामरसे इत्यादिषु प्रथमातृतीये 'प्राकृते लिङ्गवचनमतन्त्रम्' इत्यादि हेमचन्द्राद्युक्तत्वाद्बोद्धव्ये ॥ ४१ ॥ **चतुरस्रकेणेति** । संस्थानविशेषश्चतुरस्रकम् । यदुक्तम्—'नन्द्यावर्तस्थयोरघ्रौ भवेदष्टादशाङ्गुलम् । अन्तरे चतुरैः स्थानं चतुरस्रं तदोदितम् ॥' इति ॥ **मधुकरेति** । मधुकरो भ्रमरः । मदिराक्ष्याः सालसनेत्रायाः प्रवृत्तिं वृत्तान्तम् ॥ ४२ ॥ नीपो धूलिकदम्बः । स्कन्धः शाखा ॥ गजान्यापदेशेनाह—**करिणीति** । करिणीविरहसंतापितः । कानने गन्धोद्धतः मधुकरः । पुष्पगन्धोद्धतः । गन्धोद्धतो गर्वोद्धत इति वा । गजो भ्रमतीति शेषः । 'गन्धः संबन्धलेशयोर्गन्धकामोदगर्वेषु' इति हेमचन्द्रः ॥ ४३ ॥ **अयमिति** । अचिरोद्गतो नूतनोत्पन्नः । उपनीतमानीतम् । अभिलेढु आस्वादयतु । तावदादौ । आसवो मदिरा । शल्लकी गजप्रियस्तरुभेदः । 'शल्लकी श्वाविद्गयोः' इति लोचनः । भङ्गो नवपल्लवः । 'भङ्गस्तरङ्ग उद्भेदे भङ्गो जयविपर्यये' इति च सः

(स्थानकेनावलोक्य ।) अये, कृताहारकः संवृत्तः । भवतु । समीपमस्य गत्वा पृच्छामि ।

(अनन्तरे चर्चरी ।)

[1]हंइं पैं पुच्छिमि आअक्खहि गअवरु
ललिअपहारें णासिअतरुवरु ।
दूरविणिज्जिअससहरकन्ती
दिट्ठी पिअ पैं संमुहजन्ती ॥ ४५ ॥

(पदद्वयं पुरत उपसृत्य ।)

मदकलयुवतिशशिकला गजयूथप यूथिकाशबलकेशी ।
स्थिरयौवना स्थिता ते दूरालोके सुखालोका ॥ ४६ ॥

(सहर्षमाकर्ण्य ।) अहह, अनेन प्रियोपलब्धिशंसिना मन्द्रकण्ठगर्जितेन समाश्वसितोऽस्मि । साधर्म्याद्भूयसी मे त्वयि प्रीतिः ।

मामाहुः पृथिवीभृतामधिपतिं नागाधिराजो भवा-
न्व्युच्छिन्नपृथुप्रवृत्ति भवतो दानं ममाप्यर्थिषु ।

---

१. अहं त्वां पृच्छामि आचक्ष्व गजवर
ललितप्रहारेण नाशिततरुवर ।
दूरविनिर्जितशशधरकान्ति-
र्दृष्टा प्रिया त्वया संमुखं यान्ती ॥

---

॥४४॥ **स्थानकेनेति** । स्थानकमालापविशेषः । तथा चाभाणीद्भरतः—'स्थानकं तद्वदेव स्यात्पृथग्भूतविदारिकम्' इति । तद्वदिति प्रकृतालापवदित्यर्थः ॥ गजं प्रति प्रियाप्रवृत्तिं पृच्छति—**हंइं पैं इति** । अहं पै परं त्वां वा पृच्छामि आचक्ष्व गजवर ललितप्रहारेण नाशिततरुवर । दूरविनिर्जितशशधरकान्तिर्दृष्टा प्रिया त्वया संमुखं यान्ती ॥ दूरमत्यन्तं विनिर्जिता पराजिता आह्लादकतातिशयनिष्कलङ्कतादियुतमुखेनेति शेषः । शशलाञ्छनकान्तिर्यया । शशधरेत्यनेन पूर्णचन्द्रता द्योत्यते॥४५॥ **मदकलेति** । मदेन कलो मधुराव्यक्तशब्दः । 'कलस्तु मधुराव्यक्तशब्दे जीर्णे' इति लोचनः । युवतिशशिकलेत्यनेन युवतीनां तारकात्वम्, शशिकलेत्यनेन च निष्कलङ्कता द्योत्यते । स्थिरयौवनात्वं तु देवतात्वादेव ॥४६॥ साधर्म्यात्समानधर्मत्वात् । तदेवाह—**मामाहुरिति** । विशेषेण उच्छिन्ना न भवतीत्यव्युच्छिन्ना पृथ्वी म-

स्त्रीरत्नेषु ममोर्वशी प्रियतमा यूथे तवेयं वशा
सर्वं मामनु ते प्रियाविरहजां त्वं तु व्यथां मानुभूः ॥ ४७ ॥

सुखमास्तां भवान् (द्विपदिकया परिक्रम्यावलोक्य च ।) अये, अयमसौ सुरभिकंदरो नाम विशेषरमणीयः सानुमान् । प्रियश्चायमप्सरसाम् । अपि नाम सुतनुरस्योपत्यकायामुपलभ्येत । (परिक्रम्यावलोक्य च ।) कथमन्धकारः । भवतु विद्युत्प्रकाशेनावलोकयामि । कथं मदीयैर्दुरितपरिणामैर्मेघोदयोऽपि शतह्रदाशून्यः संवृत्तः । तथापि शिलोच्चयमेनमपृष्ट्वा न निवर्तिष्ये ।

(अनन्तरे खण्डिकः ।)

पंसरिअखरखुरदारिअमेइणि वणगहणे अविचल्लु ।
परिसप्पइ पेच्छह लीणो णिअकज्जुज्जुअ कोलु ॥ ४८ ॥

---

१. प्रसृतखरखुरदारितमेदिनिर्वनगहनेऽविचलः ।
परिसर्पति पश्यत लीनो निजकार्योद्युक्तः कोलः ॥

---

हती प्रवृत्तिरादरो यस्मिंस्तत् । 'पक्षे प्रवृत्तिरुद्गमो यस्य' । 'दानं गजमदे त्यागे' इत्युभयत्र त्रिकाण्डी । वशा करिणी । 'वशा योषासुतावन्ध्यास्त्रीगुर्वीकरिणीष्वपि' इति लोचनः ॥ ४७ ॥ **अनन्तरे खण्डकेति** । गीतिविशेषः खण्डिका । यदुक्तम्—'पर्यायेण शनैस्तिर्यङ्नतमुक्तं धुतं शिरः । श्रीरागकुम्भतालेन निबद्धा खण्डिका मता ॥' इति । कुम्भतालश्च—'कामबाणद्रुता यत्र अर्धचन्द्रस्ततः परम् । दविरामो लघुश्चैको बिन्दुश्चार्धद्रुतो भवेत् । दविरामो लघुद्वन्द्वद्रुतो लघुविरामवान् ॥' इति च । यथा—'ते ते ते ते ते ति थ्यै थे ते ति थ्ये थै थै ते थै' ॥ खण्डिका
० ० ० ० ० ˘ ऽ । ० ˘ ऽ । । ० ।
गद्यभेदो वा । प्राह च भगवान्भरतः—'खण्डी गणेशदैवत्या सात्वतीं वृत्तिमाश्रिता । श्वेता हास्यकृदारब्धा वैदर्भीभङ्गिसंभवा ॥' इति वराहान्यापदेशेनाह—**पसरिएति** । प्रसृतखरखुरदारितमेदिनिर्वनगहनेऽविचलः । परिसर्पति पश्यत लीनो निजकार्योद्युक्तः कोलः ॥ अविचलो धीरः । वनगहने लीनोऽपि निजकार्योद्युक्तः कन्दाद्यन्वेषणार्थं कृतोद्योगः परिसर्पतीतस्ततो भ्रमति । प्रसृतखरखुरेति कन्दाद्युत्खननार्थं भूमिदारणम् । बुभुक्षया पीडितः क्रोधवशतः पृथ्वीदारणं करोतीति वा । वराहस्वभाववर्णनं वा । पक्षे धीरः क्रीडार्थं वनगहने लीनः प्रियतमान्वेषणरूपनिजकार्योद्युक्तो भ्रमति । प्रबलतरविरहखिन्नो हस्तपादेन भूम्या-

अपि वनान्तरमल्पभुजान्तरा
श्रयति पर्वत पर्वसु संनता ।
इयमनङ्गपरिग्रहमङ्गला
पृथुनितम्ब नितम्बवती तव ॥ ४९ ॥

कथं तूष्णीमेवास्ते । शङ्के विप्रकर्षान्न श्रृणोति । भवतु । समीपमस्य गत्वा पृच्छामि ।

(अनन्तरे चर्चरी ।)

फलिहसिलाअलणिम्मलणिब्भरु[1]
बहुविहकुसुमविरइअसेहरु ।
किंणरमहुरुग्गीअमणोहरु
देक्खावहि महु पिअअम महिहरु ॥ ५० ॥

(चर्चरिकयोपसृत्याञ्जलिं बद्ध्वा ।)

सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन्मया विरहिता त्वया ॥ ५१ ॥

---

१. स्फटिकशिलातलनिर्मलनिर्भर
बहुविधकुसुमविरचितशेखर ।
किंनरमधुरोद्गीतमनोहर
दर्शय मम प्रियतमां महीधर ॥

---

स्फालनं च करोति । पश्यतेत्युन्मादवशादाकाशवचनम् । यद्वा शिलोच्चयदर्शनप्रवृत्तोऽन्तरा दृष्टं वराहं वर्णयति—पसरिएति ॥ ४८ ॥ पर्वतं प्रत्याह—**अपीति** । अपि प्रश्ने । 'क्रोडो भुजान्तरम्' इत्यमरः । पर्वस्ववयवग्रन्थिषु । 'पर्व स्यादुत्सवे ग्रन्थौ पर्वप्रतिपदोरपि' इति लोचनः । नितम्बो रोधः शिखरं वा । 'कटीरके नितम्बः स्याच्छिखरे स्कन्धरोधसोः' इति सः ॥ ४९ ॥ पर्वतं प्रति प्रार्थयते—**फलिहसिलेति** । स्फटिकशिलातलनिर्मलनिर्भर बहुविधकुसुमविरचितशेखर । किंनरमधुरोद्गीतमनोहर दर्शय मम प्रियतमां महीधर ॥ स्फटिकशिलातलैर्निर्भरमत्यन्तं निर्मलः । निर्मलनिर्भरेत्यत्र प्राकृते पूर्वनिपातानियमान्निर्भरनिर्मलेति विधेयम् । यद्वा निर्मलेत्यन्तमेकं पदम् । निर्भरेत्यारभ्य शेखरान्तमेकम् । **देक्खावहीति** दर्शयेत्यर्थे देशी । 'निर्मलनिर्झर' इत्यपि क्वचित्पाठः ॥ ५० ॥ **सर्वक्षितिभृतामिति** । अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम् । त्रिगताख्यं वीथ्य-

(तथैव प्रतिशब्दं शृणोति। आकर्ण्य सहर्षम्।) कथं यथाक्रमं दृष्टेत्याह। भवतु। अवलोकयामि। (दिशोऽवलोक्य सखेदम्।) अयं ममैवायं कंदरान्तरविसर्पी प्रतिशब्दः। (इति मूर्च्छति। उत्थायोपविश्य सविषादम्।) अहह, श्रान्तोऽस्मि। यावदस्या गिरिणद्यास्तीरे तरङ्गवातमासेविष्ये। (द्विपदिकया परिक्रम्यावलोक्य च।) इमां नवाम्बुकलुषां स्रोतोवहां पश्यता मया रतिरुपलभ्यते। कुतः।

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम्।
पदाविद्धं यान्ती स्खलितमभिसंधाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता॥ ५२॥

भवतु। प्रसादयामि तावदेनाम्।

(अनन्तरे कुटिलिका।)

पसीअ पिअअम सुन्दरि एणए
खुहिआकरुणविहङ्गमए णए।
सुरसरितीरसमूसुअएणए
अलिउलझंकारिए णए॥ ५३॥

---

१. प्रसीद प्रियतमे सुन्दरि एनया
क्षुभिताकरुणविहङ्गमके नत्या
सुरसरित्तीरसमुत्सुकैणके
अलिकुलझंकारिते नदि॥

ङ्गं चेदम्। तथा चाह साहित्यदर्पणकृत्—'त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः' इति॥ ५१॥ **तरङ्गभ्रूभङ्गेति**। 'यथा' शब्दः कोपव्यञ्जकेषु तरङ्गेत्याद्याविद्धमित्यन्तेषु विशेषणेषु योज्यः। आविद्धं स्खलनपूर्वकं वक्रं वा याति। तथा ध्रुवमुत्प्रेक्षायाम्। बहुशो बहुतरं स्खलितं मत्कृतमपराधमभिसंधाय मनसि निधायासहना सोर्वशी नदीत्वेन परिणता। 'आविद्धः प्रहते वक्रे' इति विश्वलोचनः। 'स्खलितं तूचिताद्भ्रंशे स्खलितं चलिते त्रिषु' इति च सः॥ ५२॥ नदीत्वेन ज्ञातां प्रियां प्रत्याह—**पसीएति**। प्रसीद प्रियतमे सुन्दरि एनया क्षुभिताकरुण-

(तेन कुटिलिकान्तरे चर्चरी ।)

पुव्वदिसापवणाहअकल्लोलुग्गअबाहओ
मेहअङ्गे णच्चइ सललिअँ जलणिहिणाहओ ।
हंसरहङ्गसङ्खकुङ्कुमकआभरणु
करिमअराउलकसणकमलकआवरणु ।
वेलासलिलुव्वेल्लिअहत्थदिण्णतालु
ओत्थरइ दसदिस रुन्धेविणु णवमेहआलु ॥ ५४ ॥

१. पूर्वदिक्पवनाहतकल्लोलोद्गतबाहु-
मेघाङ्गैर्नृत्यति सललितं जलनिधिनाथः
हंसरथाङ्गशङ्खकुङ्कुमकृताभरणः
करिमकराकुलकृष्णकमलकृतावरणः ।
वेलासलिलोद्वेल्लितहस्तदत्ततालो-
ऽवस्तृणाति दशदिशो रुद्ध्वा नवमेघकालः ॥

विहङ्गमके नत्या। सुरसरित्तीरसमुत्सुकैणके अलिकुलझंकारिते नदि ॥ सुन्दरि नदि प्रियतमे नदीरूपे प्रियतमे, एनया नत्या प्रसीद प्रसादं रचय। प्रियतमे मयीति वा। मत्कृतनमस्कारेण नदीभावं त्यक्त्वा आलिङ्गनादिना मयि अनुग्रहं विधेहीत्यर्थः। क्षुभितेत्यादयो नदीसंबुद्धयः। नमस्कारादिना नदीभावापनयनप्रवृत्तं मामुदीक्ष्य स्वाश्रयविनाशशङ्कया क्षुभिताः प्रियागतिस्वराद्यनुकरणेन मत्पीडकत्वा-दकरुणा विहङ्गमा हंसपिकादयो यस्यां तत्संबुद्धिः। एवं च वियोगजन्यपीडा-वत्त्वे सत्यपि एतादृशमद्विरोधिविहगाश्रयदानेनापि मत्पीडाकरणं तव नोचित-मिति व्यज्यते। सुरसरिद्रूपायास्तव तीरे समुत्सुका एणा मृगा यस्यास्तत्संबुद्धिः। सुरसरिदिति संबुध्यन्तं भिन्नं वा पदम्। सुरसरित्तीरेत्यनेन च त्वमेतादृशी मत्प्रतिपक्षिपक्ष्याश्रयदाननिरताहं तु त्वयि नितरामुत्कण्ठित इत्यहो ते नैष्ठुर्यमिति ध्वन्यते॥ ५३॥ उन्मादातिशयवशतो नदीं समुद्रत्वेन कलयंस्तं च नर्तकत्वेन वर्णयति—**पुव्वदिसेति**। पूर्वदिक्पवनाहतकल्लोलोद्गतबाहुर्मेघाङ्गैर्नृत्यति सल-लितं जलनिधिनाथः। हंसरथाङ्गशङ्खकुङ्कुमकृताभरणः करिमकराकुलकृष्णकमल-कृतावरणः। वेलासलिलोद्वेल्लितहस्तदत्ततालोऽवस्तृणाति दशदिशो रुद्ध्वा नव-

(चर्चरिकयोपसृत्य जानुभ्यां स्थित्वा ।)

त्वयि निबद्धरतेः प्रियवादिनः
प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि
त्यजसि भामिनि दासजनं यतः ॥ ५५ ॥

कथं तूष्णीमेवास्ते । अथवा परमार्थतः सरिदियं नोर्वशी । अन्यथा कथं पुरूरवसमपहाय समुद्राभिसारिणी भवेत् । अनिर्वेद-प्राप्याणि श्रेयांसि । भवतु । तमेवोद्देशं गच्छामि, यत्र मे नयनयोः सा सुनयना तिरोहिता । (परिक्रम्यावलोक्य च ।) इमं तावत्प्रियाप्रवृत्तये सारङ्गमासीनमभ्यर्थये ।

अभिनवकुसुमस्तबकिततरुवरस्य परिसरे
मदकलकोकिलकूजितमधुपझंकारमनोहरे ।
नन्दनविपिने निजकरिणीविरहानलेन संतप्तो
विचरति गजाधिपतिरैरावतनामा ॥ ५६ ॥

(गलितकः। जानुभ्यां स्थित्वा ।)

कृष्णसारच्छविर्योऽयं दृश्यते काननश्रिया ।
नवशष्पावलोकाय कटाक्ष इव पातितः ॥ ५७ ॥

---

मेघकालः ॥ वेलायां सलिलस्य यदुद्वेल्लितमाघातस्तेन दत्तो हस्ततालो येन सः । हस्तदत्तेत्यत्र प्राकृते पूर्वनिपातानियमाद्दत्तहस्तेति विधेयम् । ओत्थरइ अवतरतीति वा । रुन्धेविणु रुद्ध्वेत्यर्थे देशी ॥ ५४ ॥ **त्वयीति** । निबद्धरतेर्नितरां सक्तचित्तस्य । प्रियवादिनः प्रियभाषणपरस्य । प्रणयस्य प्रीतेर्भङ्गात्पराङ्मुखं चेतोऽन्तःकरणं यस्य ॥ ५५ ॥ ऐरावतान्योक्त्याह—**अभिनवेति** । एतादृशविशेषणविशिष्टे वने भ्रमणं विरहातिशयं द्योतयति ॥ ५६ ॥ गलितको नाट्यविशेषः ॥ **कृष्णसारेति** । कृष्णसारः कृष्णमृगस्तद्वच्छविर्दीप्तिर्यस्य । पक्षे कृष्णो यः सारोऽर्थादक्ष्णः कनीनिका तच्छविर्यस्मिन् । अतिश्यान इत्यर्थः । 'शष्पं बालतृणं घासः'

(चर्चरी ।)

सुरसुन्दरि जहणभरालस पीणुत्तुङ्गघणत्थणि
थिरजोव्वण तणुसरीरि हंसगइ ।
गअणुज्जलकाणणे मिअलोअणि भमन्ते
दिट्ठी पइं तहविरहसमुद्दन्तरे उत्तारहि मंइं ॥ ५८ ॥

(उपसृत्याञ्जलिं बद्ध्वा ।) हंहो हरिणीपते,

अपि दृष्टवानसि मम प्रियां वने
कथयामि ते तदुपलक्षणं शृणु ।
पृथुलोचना सहचरी यथैव ते
सुभगा तथैव खलु सापि वीक्ष्यते ॥ ५९ ॥

कथमनादृत्य मद्वचनं कलत्राभिमुखं स्थितः । सर्वथोपपद्यते परिभवास्पदं विधिविपर्ययः । यावदन्यमवकाशमवगाहिष्ये । (परिक्रम्यावलोक्य च ।) हन्त, दृष्टमुपलक्षणं तस्या मार्गस्य ।

रक्तकदम्बः सोऽयं प्रियया घर्मान्तशंसि यस्येदम् ।
कुसुममसमग्रकेसरविषममपि कृतं शिखाभरणम् ॥ ६० ॥

१. सुरसुन्दरी जघनभरालसा पीनोत्तुङ्गघनस्तनी
स्थिरयौवना तनुशरीरा हंसगतिः ।
गगनोज्ज्वलकानने मृगलोचना भ्रमन्ती
दृष्टा त्वया तद्विरहसमुद्रान्तरादुत्तारय माम् ॥

इति त्रिकाण्डी ॥ ५७ ॥ मृगमनुयुङ्क्ते—**सुरसुन्दरीति** । सुरसुन्दरी जघनभरालसा पीनोत्तुङ्गघनस्तनी स्थिरयौवना तनुशरीरा हंसगतिः । गगनोज्ज्वलकानने मृगलोचना भ्रमन्ती दृष्टा त्वया तद्विरहसमुद्रान्तरादुत्तारय माम् ॥ स्थिरयौवनात्वे सुरसुन्दरीत्वं हेतुः । एतादृशविशेषणोपलक्षिता मत्प्रिया वने भ्रमन्ती यदि त्वया दृष्टा तर्हि मां विरहपारावारात्समुत्तारयेत्यर्थः । तत्कथनेनेति शेषः । काननस्य गगनोज्ज्वलत्वं महत्त्वनीलत्वाद्यतिशयसाधर्म्यात् भमन्ते भ्रमता त्वयेति वा । तह तथा । अनिर्वचनीयादित्यर्थ इति वा ॥ ५८ ॥ **अपीति** । अपि प्रश्ने । तदुपलक्षणं तस्याश्चिह्नम् ॥ ५९ ॥ **रक्तकदम्ब इति** । रक्तानि कद-

तत्किं नु खलु शिलाभेदगतं नितान्तरक्तमिदमवलोक्यते ।

प्रभालेपी नायं हरिहतगजस्यामिषलवः
स्फुलिङ्गः स्यादग्नेर्गहनमभिवृष्टं पुनरिदम् ।
अरे रक्ताशोकस्तबकसमरागो मणिरयं
यमुद्धर्तुं पूषा व्यवसित इवालम्बितकरः ॥ ६१ ॥

भवतु । आदास्ये तावत् । (ग्रहणं नाटयति ।)

पैणइणिबद्धासाइअओ वाहाउलणिअणअणओ ।
गअवइ गहणे दुहिअओ परिभमइ खामिअवअणओ ॥ ६२ ॥

(द्विपदिकयोपसृत्य गृहीत्वात्मगतम् ।)

मन्दारपुष्पैरधिवासितायां
यस्याः शिखायामयमर्पणीयः ।
सैव प्रिया संप्रति दुर्लभा मे
मैवैनमश्रूपहतं करोमि ॥ ६३ ॥

(इत्युत्सृजति ।)

१. प्रणयिनीबद्धास्वादो बाष्पाकुलनिजनयनः ।
गजपतिर्गहने दुःखितः परिभ्रमति क्षामितवदनः ॥

---

म्बानि कुसुमानि यस्य सः । रक्तकदम्बो हि वर्षासु कुसुमितो भवतीति ॥ ६० ॥ **प्रभालेपीति** । प्रभया तेजसा लिम्पति व्याप्नोति तादृशः । हरिणा सिंहेन हतो मारितः । स्फुलिङ्गोऽग्निकणः । अभितो वृष्टं जलं वर्षणम् । पूषा सूर्यः । व्यवसितः कृतोद्योगः ॥ ६१ ॥ गजान्यापदेशेन पुनराह—**पणइणीति** । प्रणयिनीबद्धास्वादो बाष्पाकुलनिजनयनः । गजपतिर्गहने दुःखितः परिभ्रमति क्षामितवदनः ॥ प्रणयिनीबद्धासादित इति वा । प्रणयिन्यावबद्धः अर्थात्स्वविरहेणात एवासमन्तात्सादितः कृशीकृत इत्यर्थः । प्रणयिनीबद्धाशाक इति वा । प्रणयिन्यां बद्धा आशा येन । समासान्ते कः । क्षामितवदनो म्लानीभूतास्यः ।'वासिअवअणओ' इत्यपि क्वचित्पाठः । तत्र प्रसारितवदन इत्यर्थः । वासिएति प्रसारिते देशी ॥ ६२ ॥ **मन्दारेति** । मन्दारपुष्पै-

(नेपथ्ये ।)

वत्स, गृह्यतां गृह्यताम् ।

संगमनीयो मणिरिह शैलसुताचरणरागयोनिरयम् ।
आवहति धार्यमाणः संगममाशु प्रियजनेन ॥ ६४ ॥

राजा—(ऊर्ध्वमवलोक्य ।) को मामनुशास्ति । (विलोक्य ।) कथं भगवान्मृगराजधारी । भगवन्, अनुगृहीतोऽहममुनोपदेशेन । (मणिमादाय ।) हंहो संगममणे,

तया वियुक्तस्य निमग्नमध्यया
भविष्यसि त्वं यदि संगमाय मे ।
ततः करिष्यामि भवन्तमात्मनः
शिखामणिं बालमिवेन्दुमीश्वरः ॥ ६५ ॥

(परिक्रम्यावलोक्य च ।) अये, किं नु खलु कुसुमरहितामपि लतामिमां पश्यता मया रतिरुपलभ्यते । अथवा स्थाने मम मनो रमते । इयं हि—

तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा ।
चिन्तामौनमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥ ६६ ॥

यावदस्यां प्रियानुकारिण्यां लतायां परिष्वङ्गप्रणयी भमामि ।

लंए पेक्ख विणु हिअए भवामि
जइ विहिजोए पुणि तहिं पाविमि ।

---

१. लते प्रेक्षस्व विना हृदयेन भ्रमामि
यदि विधियोगेन पुनस्तां प्राप्स्यामि ।

---

स्तदाख्यकल्पपादपप्रसूनैरधिवासितायां सुगन्धीकृतायाम् । अश्रूपहतं बाष्पदूषितम्॥६३॥**संगमनीय इति**। संगमनीयनामा । आवहति करोति॥६४॥ **तयेति**। निमग्नमध्ययातिसूक्ष्मावलग्नया ॥ ६५ ॥ **तन्वीति** । चण्डी कोपना । 'चण्डी तु पार्वत्यां हिंस्रकोपनयोषितोः' इति लोचनः ॥६६॥ लतां प्रत्याह—**लए पेक्खेति**।

ता रण्णे विणु करिमि णिब्भन्ती
पुण णइ मेल्लइ ताह कअन्ती ॥ ६७ ॥

(इति चर्चरिकयोपसृत्य लतामालिङ्गति । ततस्तदीयस्थानमाक्रम्यैव प्रविष्टोर्वशी ।)

**राजा**—(निमीलिताक्षः स्पर्शं नाटयित्वा ।) अये, उर्वशीगात्रस्पर्शादिव निर्वृतं मे हृदयम् । पुनरस्ति विश्वासः । कुतः ।

समर्थये यत्प्रथमं प्रियां प्रति
क्षणेन तन्मे परिवर्तते ऽन्यथा ।
अतो विनिद्रे सहसा विलोचने
करोमि न स्पर्शविभावितप्रियः ॥ ६८ ॥

(शनैरुन्मील्य चक्षुषी ।) कथं सत्यमेवोर्वशी । (इति मूर्च्छितः पतति ।)

**उर्वशी**—[1]समस्ससदु समस्ससदु महाराओ ।

**राजा**—(संज्ञां लब्ध्वा ।) प्रिये, अद्य जीवितम् ।

त्वद्वियोगोद्भवे चण्डि मया तमसि मज्जता ।
दिष्ट्या प्रत्युपलब्धासि चेतनेव गतासुना ॥ ६९ ॥

**उर्वशी**—[2]मरिसदु मरिसदु महाराओ । जं मए कोववसं गदाए अवत्थन्तरं पाविदो महाराओ ।

---

तदारण्येन विना करोमि निर्भ्रान्ति
पुनर्न प्रवेशयामि तां कृतान्ताम् ॥

१. समाश्वसितु समाश्वसितु महाराजः ।

२. मर्षयतु मर्षयतु महाराजः । यन्मया कोपवशं गतयावस्थान्तरं प्रापितो महाराजः ।

---

लते, प्रेक्षस्व विना हृदयेन भ्रमामि यदि विधियोगेन पुनस्तां प्राप्स्यामि । तदारण्येन विना करोमि निर्भ्रान्ति पुनर्न प्रवेशयामि तां कृतान्ताम् ॥ 'दाहकअं ती' इति पाठे दाहकृतं ताम् । निर्गता भ्रान्तिर्यस्यां क्रियायां यथा स्यात्तथा । तामरण्येन विना करोमि । इदानीं त्वरण्याद्बहिर्निष्कासयामि पुनर्न प्रवेशयामि । कदाप्यरण्यं नानयामीत्यर्थः । कृतान्तां स्वविरहेण पीडादायिकामित्यर्थः । कृतोऽन्तोऽर्थात्सुखस्य ययेति वा । यद्वा कृतामर्थात्स्वायत्तीकृतां तामुर्वशीं पुनररण्यानीं न प्रवेशयामीत्यर्थः । अथ वा पाठान्तरे दाहकृतं विरहजन्यतापजनिकाम् । संयोगे च दाहं कृन्ततीति व्युत्पत्त्या दाहनाशिकामित्यर्थ इति वा ॥ ६७ ॥ **उर्वशी** । समाश्वसितु समाश्वसितु महाराजः ॥ **उर्वशी** । मर्षयतु मर्षयतु महाराजः ।

**राजा**—नाहं प्रसादयितव्यस्त्वया । त्वद्दर्शनेन प्रसन्नो मे सबाह्यान्तरात्मा । तत्कथय कथमियन्तं कालं मया विरहिता स्थितासि ।

(अनन्तरे चर्चरी ।)

मोरा परहुअ हंस रहङ्ग
अलि गअ पव्वअ सरिअ कुरङ्गम् ।
तुज्झह कारणे रण्ण भमन्ते
को ण हु पुच्छिअ मइ रोअन्ते ॥ ७० ॥

**उर्वशी**—अन्तक्करणपच्चक्खी किदवुत्तन्तो महाराओ ।

**राजा**—प्रिये, अन्तःकरणमिति न खल्ववगच्छामि ।

**उर्वशी**—सुणादु महाराओ । पुरा भअवदा महासेणेण सा-

१. मयूरः परभृद्धंसो रथाङ्गो-
ऽलिर्गजः पर्वतः सरित्कुरङ्गः ।
तव कारणेनारण्ये भ्रमता
को न खलु पृष्टो मया रुदता ॥

२. अन्तःकरणप्रत्यक्षीकृतवृत्तान्तो महाराजः ।

३. शृणोतु महाराजः । पुरा भगवता महासेनेन शाश्वतं कुमार-

यन्मया कोपवशं गतयावस्थान्तरं प्रापितो महाराजः । मिलितामुर्वशीं प्रत्याह—**मोरा परहुपति** । मयूरः परभृद्धंसो रथाङ्गोऽलिर्गजः पर्वतः सरित्कुरङ्गः । तव कारणेनारण्ये भ्रमता को न खलु पृष्टो मया रुदता ॥ 'हंस विहङ्गम' इति पाठे हंसः कलहंसः विहङ्गमश्चक्रवाक इत्यर्थः ॥ ७० ॥ **उर्वशी** । अन्तःकरण-प्रत्यक्षीकृतवृत्तान्तो महाराजः ॥ **उर्वशी** । शृणोतु महाराजः । पुरा भगवता महासेनेन शाश्वतं कुमारव्रतं गृहीत्वा अकलुषो नाम गन्धमादनकच्छोऽध्यासितः । 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः' इति त्रिकाण्डी । कृता च

सदं कुमारव्वदं गेण्हिअ अकलुसो णाम गन्धमादणकच्छो अज्झासिदो। किदा अ त्थिदी।

राजा—कीदृशी।

उर्वशी—जा किल इत्थिआ इमं देसं आगमिस्सदि सा लदाभाए परिणदा भविस्सदि। किदो अ सावान्तो गोरीचरणराअसंभवं मणिं वज्जिअ लदाभावं ण मुञ्चिस्सदि त्ति। तदो अहं गुरुसावसंमूढहिअआ विसुमरिददेवदाणिअमा अम्हकाजणपरिहरणीअं कुमारवणं पविट्ठा। पवेसाणन्तरं अ काणणोवन्तवत्तिलदाभाएण परिणदं मे रूवम्।

राजा—प्रिये, सर्वमुपपन्नम्।

रतिखेदसुप्तमपि मां शयने या मन्यसे प्रवासगतम्।
सा त्वमिहैतदवस्थं कथं सहेथाश्चिरवियोगम्॥ ७१॥

इदं चैतद्यथाकथितं संगमनिमित्तं पुनरुपलब्धप्रभावमस्माभिः। (इति मणिं दर्शयति।)

व्रतं गृहीत्वा अकलुषो नाम गन्धमादनकच्छोऽध्यासितः। कृता च स्थितिः।

१. या किल स्त्री इमं देशमागमिष्यति सा लताभावेन परिणता भविष्यति। कृतश्च शापान्तो गौरीचरणरागसंभवं मणिं वर्जयित्वा लताभावं न मोक्ष्यतीति। ततोऽहं गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतं मे रूपम्।

---

स्थितिः। स्थितिर्मर्यादा॥ **उर्वशी**। या किल स्त्री इमं देशमागमिष्यति सा लताभावेन परिणता भविष्यति। कृतश्च शापान्तो गौरीचरणरागसंभवं मणिं वर्जयित्वा लताभावं न मोक्ष्यतीति। ततोऽहं गुरुशापसंमूढहृदया विस्मृतदेवतानियमा स्त्रीजनपरिहरणीयं कुमारवनं प्रविष्टा। प्रवेशानन्तरं च काननोपान्तवर्तिलताभावेन परिणतं मे रूपम्॥ **रतिखेदेति**। रतिखेदेन मैथुनजनितश्रमेण। एतदवस्थमे-

**उर्वशी**—[1]कधं संगमणीओ अअं मणी । अदो एव्व महाराएण आलिङ्गित ज्जेव एदंवत्थम्हि संवुत्ता ।

**राजा**—(ललाटे मणिं संनिवेश्य ।)

स्फुरता विच्छुरितमिदं रागेण मणेर्ललाटनिहितस्य ।
श्रियमुद्वहति मुखं ते बालातपरक्तकमलस्य ॥ ७२ ॥

**उर्वशी**—[2]पिअंवद, महन्तो क्खु कालो अम्हाणं पइट्ठाणदो निग्गदाणम् । कदाइ असूइस्सन्ति पकिदिओ अम्हाणम् । ता एहि । गच्छम्ह ।

(इत्युत्तिष्ठतः ।)

**राजा**—यदाह भवती ।

**उर्वशी**—[3]अध कधं महाराओ गन्तुं इच्छदि ।

**राजा**—

अचिरप्रभाविलसितैः पताकिना
सुरकार्मुकाभिनवचित्रशोभिना ।
गमितेन खेलगमने विमानतां
नय मां नवेन वसतिं पयोमुचा ॥ ७३ ॥

---

१. कथं संगमनीयोऽयं मणिः । अत एव महाराजेनालिङ्गितैवैतदवस्थास्मि संवृत्ता ।

२. प्रियंवद, महान्खलु काल आवयोः प्रतिष्ठानान्निर्गतयोः । कदाचिदसूयिष्यन्ति प्रकृतय आवाम् । तदेहि । गच्छावः ।

३. अथ कथं महाराजो गन्तुमिच्छति ।

---

वंप्रकारकम् अनिर्वचनीयदशमिति यावत् ॥ ७१ ॥ **उर्वशी** । कथं संगमनीयोऽयं मणिः । अत एव महाराजेनालिङ्गितैवैतदवस्थास्मि संवृत्ता ॥ **उर्वशी** । प्रियंवद, महान्खलु काल आवयोः प्रतिष्ठानान्निर्गतयोः। कदाचिदसूयिष्यन्ति प्रकृतय आवाम्। तदेहि । गच्छावः । प्रतिष्ठानादिति प्रयागपूर्वतीरस्थित 'झूंसी' संज्ञकात्स्वनगरात् ॥ **उर्वशी** । अथ कथं महाराजो गन्तुमिच्छति ॥ **अचिरप्रभेति** । हे सलीलग-

(चर्चरी ।)

पाविअसहअरिसंगमओ पुलअपसाहिअअङ्गअओ ।
सेच्छापत्तविमाणओ विहरइ हंसजुआणओ ॥ ७४ ॥

(इति खण्डधारया निष्क्रान्तौ ।)

## चतुर्थोऽङ्कः ।

१. प्राप्तसहचरीसंगमः पुलकप्रसाधिताङ्गः
स्वेच्छाप्राप्तविमानो विहरति हंसयुवा ॥

मने, अचिरप्रभा विद्युत्तद्विलसितैः केतुमता । सुरकार्मुकमेवाभिनवं नूतनं चित्रमालेख्यं तेन शोभमानेन । 'आलेख्याश्चर्ययोश्चित्रम्' इति त्रिकाण्डी । विमानत्वं प्रापितेन स्वभावेनेति शेषः । नूतनेन मेघेन मां गृहं प्रापय ॥ ७३ ॥ हंसान्यापदेशेनाह—**पाविएति** । प्राप्तसहचरीसंगमः पुलकप्रसाधिताङ्गः । स्वेच्छाप्राप्तविमानो विहरति हंसयुवा ॥ प्रसाधितं भूषितम् । स्वेच्छयैव प्राप्तं विमानं यानं येन । स्वेच्छया विहरतीत्यर्थः । यद्वा स्वेच्छया ईश्वरेच्छया प्राप्तो विशिष्टो मानः प्रियासङ्गालिङ्गनादिजन्य उत्कर्षो येन । पक्षे अभिलाषोपनीतव्योमयानः ॥ ७४ ॥ **खण्डधारयेति** । खण्डधाराख्यां गीतिमुक्त्वा निष्क्रान्तावित्यर्थः । तल्लक्षणं च पूर्वमुक्तम् ॥

विवृतिर्विक्रमोर्वश्याश्चतुर्थेऽङ्के यथामति ।
निर्मिता रङ्गनाथेन सद्भिः संशोध्यतामियम् ॥

**इति श्रीमच्छिम्बेकरमौनिकुलमौलिमण्डनरङ्गनाथदीक्षितकुक्षिजश्रीबालकृष्णतनूजनिरङ्गनाथनिर्मितायां विक्रमोर्वशीप्रकाशिकायां चतुर्थाङ्कोन्मेषः ॥**



# पञ्चमोऽङ्कः ।

(ततः प्रविशति हृष्टो विदूषकः ।)

**विदूषकः**—[१]ही ही भो, दिट्ठिआ चिरस्स कालस्स उव्वसीसहाओ तत्तभवं राआ णन्दणवणप्पमुहेसु पदेसेसु विहरिअ पडिणिवुत्तो । पविसिअ णअरं दाणीं सकज्जाणुसासणेण पइदिमण्डलं अणुरज्जअन्तो रज्जं करेदि । असंताणत्तणं वज्जिअ से ण किंवि सो अणीअम् । अज्ज तिहिविसेसो त्ति भअवदीणं गङ्गाजमुणाणं संगमे देवीए सह किदाहिसेओ संपदं उवआरिअं उवविट्ठो । ता जाव अलंकरणीअमाणस्स अङ्गाणुलेवणमल्लभाई भादुओ विअ होमि । (इति परिक्रामति ।)

(नेपथ्ये ।)

[२]हद्धी हद्धी । एसो तालवेन्तपिधाणं णिक्खिविअ णीअमाणो

---

१. ही ही भोः, दिष्ट्या चिरस्य कालस्योर्वशीसहायस्तत्रभवान्राजा नन्दनवनप्रमुखेषु प्रदेशेषु विहृत्य प्रतिनिवृत्तः । प्रविश्य नगरमिदानीं स्वकार्यानुशासनेन प्रतिकृतिमण्डलमनुरञ्जयन्राज्यं करोति । असंतानत्वं वर्जयित्वास्य न किमपि शोचनीयम् । अद्य तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः संगमे देव्या सह कृताभिषेकः सांप्रतमुपकार्यामुपविष्टः । तद्यावदलंक्रियमाणस्याङ्गानुलेपनमाल्यभागी भ्रातेव भवामि ।

२. हा धिक् हा धिक् । एष तालवृन्तपिधानं निक्षिप्य नीयमा-

---

इदानीं विदूषकमुखेनाग्रिमकथोपक्षेपार्थं तत्प्रवेशमाह—**तत इति** । उर्वशीसहितराजागमनतो हृष्टः ॥ **विदूषकः** । 'ही ही भोः' इत्याश्चर्ये । दिष्ट्या चिरकालात् । चिरस्येत्यव्ययम् । उर्वशीसहायस्तत्रभवान्राजा नन्दनवनप्रमुखेषु प्रदेशेषु विहृत्य प्रतिनिवृत्तः । प्रविश्य नगरमिदानीं स्वकार्यानुशासनेन प्रकृतिमण्डलमनुरञ्जयन्राज्यं करोति । असंतानत्वं वर्जयित्वास्य न किमपि शोचनीयम् । अद्य तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः संगमे देव्या सह कृताभिषेकः सांप्रतमुपकार्यामुपविष्टः । 'अलंकर्तुमुपविष्टः' इत्यपि पाठः । तद्यावदलंक्रियमाणस्याङ्गनाङ्गानुलेपनमाल्यभागी भ्रातेव भवामि । तिथिविशेषो माघ्यादिः । कृताभिषेको विहितस्नानः । उपकार्यामिति सप्तम्यर्थे । 'प्राकृते लिङ्गवचनमतन्त्रम्' इत्यभियुक्तोक्तेः 'उवआरिअं पविट्ठो' इति पाठे तु युक्त एवार्थः । 'उपकार्योपकारिका' इति त्रिकाण्डी ॥ **नेपथ्य इति** । चूलिकार्थसूचनाच्चूलिकेयम् । तल्लक्षणमुक्तं प्राक् । हा धिक् हा धिक् । एषतालवृन्तपिधानं निक्षिप्य नीयमानोऽप्स-

अच्छराविरहिदेण मोलिरअणदाए योइदो मणी आमिससङ्किणा गिद्धेण आक्खित्तो।

**विदूषकः**—(आकर्ण्य।) अच्चाहिदं अच्चाहिदम्। परमबहुमदो क्खु तव वअस्स संगमणीओ णाम चूडामणी। अदो क्खु असमत्तणेवत्थो एव्व तत्तभवं आसणादो उट्ठिदो। ता पासपरिवत्ती होमि। (इति निष्क्रान्तः।)

**प्रवेशकः।**

(ततः प्रविशति राजा सूतश्च कञ्चुकिवेधकौ परिजनश्च।)

**राजा**—वेधक वेधक,

आत्मनो वधमाहर्ता क्वासौ विहगतस्करः।
येन तत्प्रथमं स्तेयं गोप्तुरेव गृहे कृतम्॥ १॥

**किरातः**—ऐसो अग्गमुहलग्गहेमसुत्तेण मणिणा अणुरज्जअन्तो विअ आआसं भमदि।

नोऽप्सरोविरहितेन मौलिरत्नतायां योजितो मणिरामिषशङ्किना गृध्रेणाक्षिप्तः।

१. अत्याहितमत्याहितम्। परमबहुमतः खलु तव वयस्य संगमनीयो नाम चूडामणिः। अतः खल्वसमाप्तनेपथ्य एव तत्रभवानासनत उत्थितः। तत्पार्श्वपरिवर्ती भवामि।

२. एषोऽग्रमुखलग्नहेमसूत्रेण मणिनानुरञ्जयन्निवाकाशं भ्रमति।

रोविरहितेन, अर्थाद्भर्त्रा, मौलिरत्नतायां योजितो मणिरामिषशङ्किना गृध्रेणाक्षिप्तः। 'व्यजनं तालवृन्तकम्' इति त्रिकाण्डी॥ **विदूषकः**। अत्याहितमत्याहितम्। 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इति त्रिकाण्डी। परमबहुमतः खलु तव वयस्य संगमनीयो नाम चूडामणिः। अतः खल्वसमाप्तनेपथ्य एव तत्रभवानासनत उत्थितः। तत्पार्श्वपरिवर्ती भवामि। प्रवेशकलक्षणमुक्तं प्राक्। वेधक इति किरातनाम। क्वचिद्रेचक इत्यपि॥ **आत्मनो वधमाहर्तेति**। स्ववधकर्ता तत्प्रथममाद्यम्। गोप्तुः पालकस्य॥ १॥ **किरातः**। एषोऽग्रमुखलग्नहेमसूत्रेण मणिनानुरञ्ज[य]न्निवाकाशं भ्रमति। 'मुखकोटिलग्न–'इ-

**राजा**—पश्याम्येनम् ।

असौ मुखालम्बितहेमसूत्रं
बिभ्रन्मणिं मण्डलशीघ्रचारः ।
अलातचक्रप्रतिमं विहङ्ग-
स्तद्रागलेखावलयं तनोति ॥ २ ॥

कथय । किं खल्वत्र कर्तव्यम् ।

**विदूषकः**—(उपेत्य ।) भोः, अलं एत्थ घिणाए । अवराही सासणीओ

**राजा**—सम्यगाह भवान् । धनुर्धनुस्तावत् ।

**परिजनः**—[2]जं भट्टा आणवेदि । (इति निष्क्रान्तः ।)

**राजा**—न दृश्यते हि विहगाधमः ।

**विदूषकः**—[3]इदोइदो दक्खिणन्तरेण चलिदो सउणिहदासो ।

**राजा**—(दृष्ट्वा ।) इदानीं

प्रभापल्लवितेनासौ करोति मणिना खगः ।
अशोकस्तबकेनेव दिङ्मुखस्यावतंसकम् ॥ ३ ॥

**यवनी**—(धनुर्हस्ता प्रविश्य ।) भट्टा, एदं ससरं चावम् ।

१. भोः, अलमत्र घृणया । अपराधी शासनीयः ।
२. यद्भर्ताज्ञापयति ।
३. इत इतो दक्षिणान्तरेण चलितः शकुनिहताशः ।
४. भर्तः, इदं सशरं चापम् ।

त्यपि पाठः । अग्रमुखेत्यत्र मुखाग्रमिति पूर्वनिपातनियमाज्ज्ञेयम् ॥ **असाविति** । मण्डलैस्तदाकारभ्रमणैः शीघ्रं चारो गतिर्यस्य । अलातं ज्वलत्काष्ठं तस्य चक्रम् । तत्प्रतिमं तत्सदृशम् । तस्य मणे रागलेखा तस्या वलयं मण्डलम् ॥ २ ॥ **विदूषकः** । भोः, अलमत्र घृणया । अपराधी शासनीयः ॥ **परिजनः** । यद्भर्ताज्ञापयति ॥ **विदूषकः** । इत इतो दक्षिणान्तरेण चलितः शकुनिहताशः ॥ **प्रभेति** । प्रभया द्युत्या पल्लवितेन विस्तृतेन ॥ ३ ॥ अतीतोऽतिक्रान्तः । क्रव्यभोजनो मांसाशी । पिशितं तरसं मांसं पललं क्रव्यमामिषम्' इति

**राजा**—किमिदानीं धनुषा। बाणपथातीतः क्रव्यभोजनः। तथाहि।

आभाति मणिविशेषो दूरमिदानीं पतत्रिणा नीतः।
नक्तमिव लोहिताङ्गः परुषघनच्छेदसंपृक्तः ॥ ४ ॥

आर्य लातव्य।

**कञ्चुकी**—आज्ञापयतु देवः।

**राजा**—मद्वचनादुच्यन्तां नागरिकाः सायं निवासवृक्षाग्रे विचीयतां विहगाधमः।

**कञ्चुकी**—यथाज्ञापयति देवः। (इति निष्क्रान्तः।)

**विदूषकः**—[1]भो, विसमीअदु भवं संपदम्। कहिं गदो सो रअणुकुम्भीलओ भवादो सासणादो मुञ्चिस्सदि।

(इत्युपविशतः।)

**राजा**—वयस्य,

रत्नमिति न मे तस्मिन्मणौ प्रयासो विहङ्गमोत्क्षिप्ते।
प्रियया तेनास्मि सखे संगमनीयेन संगमितः ॥ ५ ॥

(ततः प्रविशति सशरं मणिमादाय कञ्चुकी।)

**कञ्चुकी**—जयति जयति देवः।

अनेन निर्भिन्नतनुः स वध्यो।
रोषेण ते मार्गणतां गतेन।

---

१. भोः, विश्राम्यतु भवान्सांप्रतम्। कुत्र गतः स रत्नकुम्भीरको भवतः शासनान्मोक्ष्यते।

---

त्रिकाण्डी ॥ **आभातीति**। मणिविशेष उत्कृष्टो मणिः। लोहिताङ्गो मङ्गलः। 'लोहिताङ्गो महीसुतः' इति च सा। परुषघनच्छेदः परिणतमेघखण्डः ॥ ४ ॥ लातव्य इति कञ्चुकिनाम। तल्लक्षणमुक्तं प्राक् ॥ **विदूषकः**। भोः, विश्राम्यतु भवान्सांप्रतम्। कुत्र गतः स रत्नकुम्भीरको भवतः शासनान्मोक्ष्यते। 'कुम्भीरको गण्डपदस्तस्करश्च मलिम्लुचः' इति कोषः ॥ **रत्नमिति नेति**। विहङ्गमेन पक्षिणोत्क्षिप्ते नीते। संगमनीयेन तन्नाम्ना। संगमितः सङ्गं प्रापितः ॥ ५ ॥ **अनेनेति**। निर्भिन्नतनुर्विदारितशरीरः। वधमर्हतीति तादृशः। मार्गणतां गतेन

प्राप्तापराधोचितमन्तरीक्षा-
त्समौलिरत्नः पतितः पतत्री ॥ ६ ॥

(सर्वे विस्मयं रूपयन्ति ।)

**कञ्चुकी**—अभिप्रक्षालितोऽयं मणिः कस्मै प्रदीयताम् ।

**राजा**—वेधक, गच्छ । कोषपेट्टके स्थापयैनम् ।

**किरातः**—[1]जं भट्टा आणवेदित्ति । (इति मणिमादाय निष्क्रान्तः ।)

**राजा**—(लातव्यं प्रति ।) आर्य, जानाति भवान्कस्यायं बाण इति ।

**कञ्चुकी**—नामाङ्कितो दृश्यते । नात्र मे वर्णविभावसहा दृष्टिः ।

**राजा**—तदुपश्लेषय शरं यावन्निरूपयामि ।

**विदूषकः**—[2]किं भवं विआरेदि ।

**राजा**—शृणु तावत्प्रहर्तुर्नामाक्षराणि ।

**विदूषकः**—[3]अवहिदो म्हि ।

**राजा**—(वाचयति ।)

उर्वशीसंभवस्यायमैलसूनोर्धनुष्मतः ।
कुमारस्यायुषो बाणः संहर्ता द्विषदायुषाम् ॥ ७ ॥

**विदूषकः**—[4]दिट्ठिआ संताणेण वड्ढदि महाराओ ।

---

१. यद्भर्ताज्ञापयतीति ।

२. किं भवान्विचारयति ।

३. अवहितोऽस्मि ।

४. दिष्ट्या संतानेन वर्धते महाराजः ।

---

रोषेण बाणभावं प्राप्तेन क्रोधेन । अपराधस्योचितं योग्यं शासनमित्यर्थात् ॥ ६ ॥ कोषपेट्टके भाण्डागारान्तर्वर्तिनि वंशादिरचितपेटिकाख्यपात्रे ॥ **किरातः** । यद्भर्ताज्ञापयतीति । उपश्लेषयान्तिके समानय । यावद्योगेन निरूपयामीति भविष्यदर्थः ॥ **विदूषकः** । किं भवान्विचारयति ॥ **विदूषकः** । अवहितोऽस्मि ॥ **उर्वशीसंभवस्येति** । ऐलस्य पुरूरवसः सूनोः पुत्रस्य । आयुर्नामकस्य । कुमारस्य शत्रूणामायुषां द्विषज्जीवितानाम् ॥ ७ ॥ **विदूषकः** । दिष्ट्या संतानेन वर्धते महा-

**राजा**—कथमेतत् । सखे, अनिमिष्या वियुक्तोऽहमुर्वश्या । न कदाचिदपि तत्रभवती गर्भाविर्भूतदोहदाप्युपलक्षिता । कुत एव प्रसूतिः । किं तु

आविलपयोधराग्रं लवलीदलपाण्डुराननच्छायम् ।
कतिचिदहनि शरीरं श्लथवलयमिवाभवत्तस्याः ॥ ८ ॥

**विदूषकः**—[1]मा भवं माणुसीधम्मं दिव्वाए ताए संभावेदु । पभावगूढाइं ताणं चरिदाइं ।

**राजा**—अस्तु तावदेवं यथाह भवान् । पुत्रसंवरणे किमिव कारणं तत्रभवत्याः ।

**विदूषकः**—[2]मा बुड्ढं मं राआ परिहरिस्सदि त्ति ।

**राजा**—कृतं परिहासेन । चिन्त्यताम् ।

**विदूषकः**—[3]को देवरहस्साइं तक्कइस्सदि ।

**कञ्चुकी**—(प्रविश्य ।) जयति जयति देवः । देव, च्यवनाश्रमात्कुमारं गृहीत्वा तापसी संप्राप्ता देवं द्रष्टुमिच्छति ।

**राजा**—उभयमप्यविलम्बितं प्रवेशय ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निर्गम्य तापसीसहितं कुमारमादाय प्रविष्टः ।)

१. मा भवान्मानुषीधर्मं दिव्यायास्तस्याः संभावयतु । प्रभावगूढानि तासां चरितानि ।

२. मा वृद्धां मां राजा परिहरिष्यतीति ।

३. को देवरहस्यानि तर्कयिष्यति ।

---

राजः । 'दिष्ट्येत्यानन्दने' इति सागरः ॥ अनिमिषी देववनिता । 'अन्यत्र नैमिषेयसत्रात्' इत्यपि क्वचित्पाठः । 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इति कोषः ॥ **आविलेति** । आविलं मलिनम् । लवली लताविशेषः । द्राक्षेति केचित् । आननं मुखम् । 'आनीलचूचुकाग्रम्' इत्यपि पाठः । 'चूचुकं तु कुचाग्रं स्यात्' इत्यमरः ॥ ८ ॥ **विदूषकः** । मा भवान्मानुषीधर्मं दिव्यायास्तस्याः संभावयतु । प्रभावगूढानि तासां चरितानि ॥ संवरणं गोपनम् ॥ **विदूषकः** । मा वृद्धां मां राजा परिहरिष्यतीति ॥ **विदूषकः** । को देवरहस्यानि तर्कयिष्यति ॥ उभयम् । कुमा-

**विदूषकः**—[1]णं क्खु एसो खत्तिअकुमारो जस्स णामाङ्किदो गिद्धलक्खवेही णाराओ उवलद्धो तत्तभवदो बहु अणुकरेदि ।

**राजा**—एवमेतत् ।

बाष्पायते निपतिता मम दृष्टिरस्मि-
न्वात्सल्यबन्धि हृदयं मनसः प्रसादः ।
संजातवेपथुभिरुज्झितधैर्यवृत्ति-
रिच्छामि चैनमदयं परिरब्धुमङ्गैः ॥ ९ ॥

**कञ्चुकी**—भगवति, एवं स्थीयताम् ।

(तापसीकुमारौ यथोचितं स्थितौ ।)

**राजा**—(उपसृत्य ।) भगवति, अभिवादये ।

**तापसी**—[2]महाराअ, सोमवंसं धारअन्तो होहि । (आत्मगतम् ।) भो, अणाचक्खिदो वि विण्णादो एव्व तस्स राएसिण आउसो अ ओरसो संबन्धो । (प्रकाशम् ।) जाद, पणम गुरुम् ।

(कुमारो बाष्पगर्भमञ्जलिं बद्ध्वा प्रणमति ।)

**राजा**—वत्स, आयुष्मान्भव ।

**कुमारः**—(स्पर्शं रूपयित्वा । स्वगतम् ।)

यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति ।
उत्सङ्गे वृद्धानां गुरुषु भवेत्कीदृशः स्नेहः ॥ १० ॥

१. ननु खल्वेष क्षत्रियकुमारो यस्य नामाङ्कितो गृध्रलक्ष्यवेधी नाराच उपलब्धस्तत्रभवतो बह्वनुकरोति ।

२. महाराज, सोमवंशं धारयन्भव । भोः, अनाख्यातोऽपि विज्ञात एव तस्य राजर्षेरायुषश्चौरसः संबन्धः । जात, प्रणम गुरुम् ।

रस्तापसी चेत्यर्थः । **विदूषकः** । ननु खल्वेष क्षत्रियकुमारो यस्य नामाङ्कितो गृध्रलक्ष्यवेधी नाराच उपलब्धः । नाराचो बाणः । तत्रभवतो बह्वनुकरोति । तत्रभवतः पूज्यस्य ॥ **बाष्पायते निपतितेति** । बाष्पमुद्गमति बाष्पायते अश्रुसंभृता भवति । वात्सल्यबन्धि प्रेमातिशययुक्तम् । वेपथुः कम्पः । परिरब्धुमालिङ्गितुम् ॥ ९ ॥ **तापसी** । महाराज, सोमवंशं धारयन्भव । भोः, अनाख्यातोऽपि विज्ञात एव तस्य राजर्षेरायुषश्चौरसः संबन्धः । जात, प्रणम गुरुम् । जातेति पुत्रामन्त्रणम् ॥ **यदि हार्दमिति** । अयं मम जनयिता । अहमस्य सुतः पुत्र इति श्रुत्वा यदि

**राजा**—भगवति, किमागमनप्रयोजनम् ।

**तापसी**—[1]सुणादु महाराओ। एसो दीहाऊ आऊ जादमेत्तो एव्व उव्वसीए किंवि णिमित्तमवेक्खिअ मम हत्थे णासीकिदो। जं खत्तिअस्स कुलीणस्स जादकम्मादिविहाणं तं से तत्तभवदा चवणेण सव्वं अणुट्ठिदम् । गिहीदविज्जो धणुव्वेदे अ विणीदो ।

**राजा**—सनाथः खलु संवृत्तः ।

**तापसी**—[2]अज्ज फुल्लसमिधकुसणिमित्तं इसिकुमारएहिं सह गदेण इमिणा अस्समवासविरुद्धं समाअरिदम् ।

**विदूषकः**—[3]कधं विअ ।

**तापसी**—[4]गहीदामिसो किल गिद्धो अस्समपादवसिहरे णिलीअमाणो लक्खीकिदो बाणस्स ।

१. श्रृणोतु महाराजः । एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तमपेक्ष्य मम हस्ते न्यासीकृतः । यत्क्षत्रियस्य कुलीनस्य जातकर्मादिविधानं तदस्य तत्रभवता च्यवनेन सर्वमनुष्ठितम् । गृहीतविद्यो धनुर्वेदे च विनीतः ।

२. अद्य पुष्पसमित्कुशनिमित्तं ऋषिकुमारकैः सह गतेनानेनाश्रमवासविरुद्धं समाचरितम् ।

३. कथमिव ।

४. गृहीतामिषः किल गृध्र आश्रमपादपशिखरे निलीयमानो लक्ष्यीकृतो बाणस्य ।

चेत् इदमपि······॥ १० ॥ **तापसी** । शृणोतु महाराजः । एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तमपेक्ष्य मम हस्ते न्यासीकृतः । यत्क्षत्रियस्य कुलीनस्य जातकर्मादिविधानं तदस्य तत्रभवता च्यवनेन सर्वमनुष्ठितम् । कुलीनस्य महावंशजस्य । कौ पृथिव्यां लीनस्य राजतो गोपितस्येति वा । गृहीतविद्यो धनुर्वेदे च विनीतः । गृहीतविद्योऽभ्यस्तविद्यः । विनीतः शिक्षितः ॥ **तापसी** । अद्य पुष्पसमित्कुशनिमित्तं ऋषिकुमारकैः सह गतेनानेनाश्रमवासविरुद्धं समाचरितम् ॥ **विदूषकः** । कथमिव ॥ **तापसी** । गृहीतामिषः किल गृध्र आश्रमपा-

**राजा**—ततस्ततः ।

**तापसी**—[1]तदो उवलद्धवुत्तन्तेण भअवदा चवणेण अहं समादिट्ठा णिज्जादेहि एदं उव्वसीहत्थे णासं त्ति ता उव्वसीं पेक्खिदुं इच्छामि ।

**राजा**—तेन ह्यासनमनुगृह्णातु भगवती ।

(प्रेष्योपनीतयोरासनयोरुपविष्टौ ।)

**राजा**—लातव्य, आहूयतामुर्वशी ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

**राजा**—(कुमारमवलोक्य ।) एह्येहि वत्स ।

सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपनतेन ।
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥ ११ ॥

**तापसी**—[2]जाद, णन्देहि पिदरम् ।

(कुमारो राजानमुपसर्पति ।)

**राजा**—(आलिङ्ग्य ।) वत्स, प्रियसखं ब्राह्मणमशङ्कितो वन्दस्व ।

**विदूषकः**—[3]किं ति सङ्किस्सदि । णं अस्समवासपरिचिदो एव्व साहामिओ ।

---

१. तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा निर्यातयैनमुर्वशीहस्ते न्यासमिति । तदुर्वशीं प्रेक्षितुमिच्छामि ।

२. जात, नन्दय पितरम् ।

३. किमिति शङ्किष्यते । नन्वाश्रमवासपरिचित एव शाखामृगः ।

---

दपशिखरे निलीयमानो लक्ष्यीकृतो बाणस्य ॥ **तापसी** । तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा निर्यातयैनमुर्वशीहस्ते न्यासमिति । निर्यातनं न्यासप्रत्यर्पणम् । 'दाने न्यासार्पणे वैरशुद्धौ निर्यातनं मतम्' इति मुक्तावली । न्यासो निक्षेपः । तदुर्वशीं प्रेक्षितुमिच्छामि ॥ **सर्वाङ्गीण इति** । किलेत्यैतिह्ये । सर्वाङ्गीणः सर्वाङ्गव्यापी । उपनतेन प्राप्तेन । तेन स्पर्शेन । 'उपगतेन' इत्यपि पाठस्तदर्थ एव ॥ ११ ॥ **तापसी** । जात, नन्दय पितरम् ॥ **विदूषकः** । किमिति शङ्किष्यते । नन्वाश्रमवासपरिचित एव शाखामृगः । आश्रम एकत्रा-

**कुमारः**—(सस्मितम् ।) तात, वन्दे ।

**विदूषकः**—[1]सोत्थि भवदो । वड्ढदु भवम् ।

(ततः प्रविशत्युर्वशी कञ्चुकी च ।)

**कञ्चुकी**—इत इतो देवी ।

**उर्वशी**—(प्रविश्यावलोक्य च ।) [2]को णु क्खु एसो कणअपीठोवविट्ठो महाराएण सज्जीअमाणसिहण्डो चिट्ठदि । (तापसीं दृष्ट्वा ।) अम्महे, सच्चवदी सहिदो पुत्तओ मे आऊ महन्तो क्खु संवुत्तो ।

**राजा**—(विलोक्य ।) वत्स,

इयं ते जननी प्राप्ता त्वदालोकनतत्परा ।
स्नेहप्रस्रवनिर्भिन्नमुद्वहन्ती स्तनांशुकम् ॥ १२ ॥

**तापसी**—[3]जाद, एहि । पच्चुवगच्छ मादरम् ।

(इति कुमारेण सहोर्वशीमुपसर्पति ।)

**उर्वशी**—[4]अज्जे, पादवन्दणं करेमि ।

---

१. स्वस्ति भवते । वर्धतां भवान् ।

२. को नु खल्वेष कनकपीठोपविष्टो महाराजेन सज्ज्यमानशिखण्डस्तिष्ठति । अहो, सत्यवतीसहितः पुत्रको मे आयुः महान्खलु संवृत्तः ।

३. जात, एहि । प्रत्युपगच्छ मातरम् ।

४. आर्ये, पादवन्दनं करोमि ।

---

वस्थित्या कृतचिरमैत्रीक इत्यर्थः ॥ **विदूषकः** । स्वस्ति भवते । वर्धतां भवान् ॥ **उर्वशी** । को नु खल्वेष कनकपीठोपविष्टो महाराजेन सज्ज्यमानशिखण्डस्तिष्ठति । शिखण्डश्चूडा । 'शिखण्डो बर्हचूडयोः' इति मुक्तावली । अम्महे आश्चर्ये । सत्यवतीसहितः पुत्रको मे आयुः । महान्खलु संवृत्तः ॥ **इयमिति** । आलोकनतत्परा विलोकनैकताना । स्नेहेन प्रेम्णा प्रस्रवः क्षरत्पयः । तेन नितरां भिन्नं संगतम् । आर्द्रीभूतमिति यावत् । 'स्नेहप्रसर-'इति पाठे स्नेहस्य प्रसरो रोमाङ्कुरस्वेदादिद्वारा आधिक्यम् । 'प्रस्रव' इति पाठे स्नेहप्रस्रवः, अर्थात्स्वेदोद्गमः । 'भिन्नं वाच्यवदत्यर्थे दारिते संगते स्फुटे' इति लोचनः ॥ १२ ॥ **तापसी** । जात, एहि प्रत्युपगच्छ मातरम् ॥ **उर्वशी** । आर्ये, पादवन्दनं करोमि ॥ **तापसी** ।

**तापसी**—[1]वच्छे, भत्तुणो बहुमदा होहि ।

**कुमारः**—अम्ब, अभिवादये ।

**उर्वशी**—[2]वच्छ, पिदरं आराधयन्तो होहि । (राजानं प्रति ।) जेदु जेदु महाराओ ।

**राजा**—स्वागतं पुत्रवत्यै । इत आस्यताम् ।

**उर्वशी**—[3]अज्जा, उवविसध ।

(सर्वे यथोचितमुपविष्टाः ।)

**तापसी**—[4]वच्छे, गिहीदविज्जो आऊ संपदं कवचारुहो संवुत्तो । एसो भत्तुणो समक्खं णिज्जादिदो सहिहत्थणिक्खेवो । ता तुम्हेहिं विसज्जिदं अत्ताणं इच्छामि । उवरुज्झइ मे अस्समधम्मो ।

**उर्वशी**—[5]कामं चिरस्स अज्जउत्तं पेक्खिअ अवहिदहिअएण जुज्जदि पुणो अस्समधम्मं विभाविदुम् । ता गच्छदु अज्जा पुणोदंसणाअ ।

१. वत्से, भर्तुर्बहुमता भव ।

२. वत्स, पितरमाराधयन्भव । जयतु जयतु महाराजः ।

३. आर्याः, उपविशत ।

४. वत्से, गृहीतविद्य आयुः सांप्रतं कवचार्हः संवृत्तः । एष भर्तुः समक्षं निर्यातितः सखीहस्तनिक्षेपः । तद्युष्माभिर्विसर्जितमात्मानमिच्छामि । उपरुध्यते मे आश्रमधर्मः ।

५. कामं चिरस्यार्यपुत्रं प्रेक्ष्यावहितहृदयेन युज्यते पुनराश्रमधर्मं विभावयितुम् । तद्गच्छत्वार्या पुनर्दर्शनाय ।

---

वत्से, भर्तुर्बहुमता भव ॥ **उर्वशी** । वत्स, पितरमाराधयन्भव । जयतु जयतु महाराजः ॥ **उर्वशी** । आर्याः, उपविशत ॥ **तापसी** । वत्से, गृहीतविद्य आयुः सांप्रतं कवचार्हः संवृत्तः । 'कवचहरः' इत्यपि पाठः । एष भर्तुः समक्षं निर्यातितः सखीहस्तनिक्षेपः । तद्युष्माभिर्विसर्जितमात्मानमिच्छामि । उपरुध्यते मे आश्रमधर्मः । 'अपराध्यति' इत्यपि पाठः ॥ **उर्वशी** । कामं चिरस्यार्यपुत्रं प्रेक्ष्यावहितहृदयेन युज्यते पुनराश्रमधर्मं विभावयितुम् । तद्गच्छत्वार्या पुनर्दर्श-

**राजा**—आर्ये, तत्रभवते च्यवनाय मम प्रणाममावेदयिष्यसि ।

**तापसी**—एव्वं[1] भोदु ।

**कुमारः**—आर्ये, सत्यमेव निवर्तनम् । इतो मामपि नेतुमर्हसि ।

**राजा**—अयि वत्स, उषितं त्वया पूर्वस्मिन्नाश्रमे । द्वितीयमध्यासितुं तव समयः ।

**तापसी**—जाद[2], गुरुणो वअणं अणुचिट्ठ ।

**कुमारः**—तेन हि

यः सुप्तवान्मदङ्के शिखण्डकण्डूयनोपलब्धसुखः ।
तं मे जातकलापं प्रेषय शितिकण्ठकं शिखिनम् ॥ १३ ॥

**तापसी**—एव्वं[3] करेमि ।

**उर्वशी**—भअवदि[4], पादवन्दणं करेमि ।

**राजा**—भगवति, प्रणमामि ।

**तापसी**—सोत्थि[5] भोदु तुम्हाणम् । इति निष्क्रान्ता ।)

**राजा**—सुन्दरि,

अद्याहं पुत्रिणामग्र्यः सुपुत्रेण तवामुना ।
पौलोमीसंभवेनेव जयन्तेन पुरंदरः ॥ १४ ॥

१. एवं भवतु ।

२. जात, गुरोर्वचनमनुतिष्ठ ।

३. एवं करोमि ।

४. भगवति, पादवन्दनं करोमि ।

५. स्वस्ति भवतु युष्मभ्यम् ।

नाय । 'कामं चिरस्य प्रेक्ष्य विरहोत्कण्ठितास्मि न पुनर्धर्मावरोधे वर्तितुम्' इत्यपि क्वचित्पाठः ॥ **तापसी** । एवं भवतु ॥ उषितं स्थितम् । पूर्वस्मिन्नाश्रमे ब्रह्मचर्याख्ये । द्वितीयो गार्हस्थ्याश्रमः ॥ **तापसी** । जात, गुरोर्वचनमनुतिष्ठ । **यः सुप्तवानिति** । सुप्तवान्निद्रां चकार । यद्वा सुप्तं स्वापो विद्यतेऽस्येति तादृशः । जातकलापमुद्गतपिच्छभारम् । 'कलापः संहते बर्हे काञ्च्यादौ तूणतून्दयोः' इति मुक्तावली । शितिकण्ठकं नीलग्रीवं तन्नामानं वा ॥ १३ ॥ **तापसी** । एवं करोमि ॥ **उर्वशी** । भगवति, पादवन्दनं करोमि ॥ **तापसी** । स्वस्ति भवतु युष्मभ्यम् ॥ **अद्याहमिति** । पुत्रिणां पुत्रवतामग्र्यः श्रेष्ठः पौलोमी

(उर्वशी स्मृत्वा रोदिति ।)

**विदूषकः**—किं[1] णु क्खु संपदं अत्तभोदी अस्सुमुही संवुत्ता ।

**राजा**—(सावेगम् ।)

किं सुन्दरि प्ररुदितासि ममोपनीते
वंशस्थितेरधिगमात्स्फुरति प्रमोदे ।
पीनस्तनोपरिनिपातिभिरर्पयन्ती
मुक्तावलीविरचनां पुनरुक्तमस्रैः ॥ १५ ॥

**उर्वशी**—सुणादु[2] महाराओ । पढमं उण पुत्तदंसणसमुत्थिदेण आणन्देण विसुमरिदम्हि । दाणीं महिन्दसंकित्तणेण मम हिअए ट्ठिदं समएण ।

**राजा**—कथ्यतां समयः ।

**उर्वशी**—अहं[3] पुरा महाराअगहिदहिअआ गुरुसावसंमूढा महिन्देण अवधीकदुअ अब्भणुण्णादा ।

१. किं नु खलु सांप्रतमत्रभवत्यश्रुमुखी संवृत्ता ।

२. शृणोतु महाराजः । प्रथमं पुनः पुत्रदर्शनसमुत्थितेनानन्देन विस्मृतास्मि । इदानीं महेन्द्रसंकीर्तनेन मम हृदये स्थितं समयेन ।

३. अहं पुरा महाराजगृहीतहृदया गुरुशापसंमूढा महेन्द्रेणावधीकृत्याभ्यनुज्ञाता ।

शची । जयन्त इन्द्रसुतः ॥ १४ ॥ **विदूषकः** । किं नु खलु सांप्रतमत्रभवत्यश्रुमुखी संवृत्ता । सांप्रतमित्यत्र 'एकपदे' इति पाठः । एकपदे तत्क्षणे । 'तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृतम्' इति हलायुधः ॥ **किं सुन्दरीति** । प्ररुदिता कृतरोदना । वंशस्य कुलस्य स्थितिरवस्थानं यस्मात्तादृशस्य सुतस्याधिगमात्प्राप्तेः कुलावस्थानप्राप्तेर्वा । 'वंशो वेणौ कुले वर्गे पृष्ठस्यावयवास्थनि । नासाविवरदेशेऽपि वाद्यभाण्डान्तरेऽपि च ॥' इति श्रीधरसेनः । 'मर्यादायामवस्थाने स्थाने सीमनि च स्थितिः' इति विश्वलोचनः । स्फुरति प्रकाशमाने । प्रमोदे संतोषे । उपनीते कृते सति । 'महति' इति क्वचित्पाठः । महति उद्दामे । पुनरुक्तमिति क्रियाविशेषणम् । 'विरचनम्' इति पाठे तद्विशेषणम् । अस्रैरश्रुभिः । 'अस्रमश्रु च (शोणितम्)' इति त्रिकाण्डी ॥ १५ ॥ **उर्वशी** । शृणोतु महाराजः । प्रथमं पुनः पुत्रदर्शनसमुत्थितेनानन्देन विस्मृतास्मि । इदानीं महेन्द्रसंकीर्तनेन मम हृदये स्थितं समयेन । समयेनावधि कालेन । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इति त्रिकाण्डी ॥ **उर्वशी** । अहं पुरा

**राजा**—किमिति ।

**उर्वशी**—[१]जदा मम सो पिअवअस्सो तुइ समुप्पण्णसुदस्स मुहं पेक्खदि तदा मम समीवं तुए आअन्तव्वं त्ति । तदो मए महाराअविओअभीरुदाए जादमेत्तो एव्व विज्जागमणिमित्तं अ भअवदो चवणस्स अस्समपदे एसो पुत्तओ अज्जाए सच्चवदीए हत्थे अप्पाणा णिक्खित्तो । अज्ज उण पिदुणो आराहणसमत्थो संवुत्तो त्ति काउण णिज्जादिदो एसो दीहाऊ आऊ । एत्तिको मे महाराएण सह संवासो ।

(सर्वे विषादं नाटयन्ति । राजा मोहमुपगच्छति ।)

**सर्वे**—[२]समस्ससदु समस्ससदु महाराओ ।

**कञ्चुकी**—समाश्वसितु महाराजः ।

**विदूषकः**—[३]अब्बम्हण्णं अब्बम्हण्णम् ।

१. यदा मम स प्रियवयस्यस्त्वयि समुत्पन्नसुतस्य मुखं प्रेक्षते तदा मम समीपं त्वयागन्तव्यमिति । ततो मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं च भगवतश्च्यवनस्याश्रमपद एष पुत्रक आर्यायाः सत्यवत्या हस्त आत्मना निक्षिप्तः । अद्य पुनः पितुराराधनसमर्थः संवृत्त इति कृत्वा निर्यातित एष दीर्घायुरायुः । एतावान्मम महाराजेन सह संवासः ।

२. समाश्वसितु समाश्वसितु महाराजः ।

३. अब्रह्मण्यमब्रह्मण्यम् ।

महाराजगृहीतहृदया गुरुशापसंमूढा महेन्द्रेणावधीकृत्याभ्यनुज्ञाता ॥ **उर्वशी** । यदा मम स प्रियवयस्यस्त्वयि समुत्पन्नसुतस्य मुखं प्रेक्षते तदा मम समीपं त्वयागन्तव्यमिति । ततो मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं च भगवतश्च्यवनस्याश्रमपद एष पुत्रक आर्यायाः सत्यवत्या हस्ते आत्मना निक्षिप्तः।अद्य पुनः पितुराराधनसमर्थः संवृत्त इति कृत्वा निर्यातित एष दीर्घायुरायुः । एतावान्मम महाराजेन सह संवासः ॥ **सर्वे** । समाश्वसितु समाश्वसितु महाराजः ॥ **विदूषकः**। अब्रह्मण्यमब्रह्मण्यम् । 'अब्रह्मण्यमवध्योक्तौ' इति त्रिकाण्डी ॥ सुखप्रत्यर्थिता

**राजा**—(समाश्वस्य ।) अहो, सुखप्रत्यर्थिता दैवस्य ।

आश्वासितस्य मम नाम सुतोपलब्ध्या
सद्यस्त्वया सह कृशोदरि विप्रयोगः ।
व्यावर्तितातपरुजः प्रथमाभ्रवृष्ट्या
वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम् ॥ १६ ॥

**विदूषकः**—अअं सो अत्थो अणत्थाणुबन्धीत्ति तक्केमि तत्तभवदा वक्कलं गेण्हिअ तवोवणं गन्तव्वं त्ति ।

**उर्वशी**—हा हदम्हि मन्दभाआ । मंवि किदविणअस्स पुत्तअस्स लम्भाणन्तरं सग्गारोहणेण अवसिदकज्जां विप्पओअमुहीं महाराओ समत्थइस्सदि ।

**राजा**—सुन्दरि, मा मैवम् ।

नहि सुलभवियोगा कर्तुमात्मप्रियाणि
प्रभवति परवत्ता शासने तिष्ठ भर्तुः ।

१. अयं सोऽर्थोऽनर्थानुबन्धीति तर्कयामि तत्रभवता वल्कलं गृहीत्वा तपोवनं गन्तव्यमिति ।

२. हा हतास्मि मन्दभाग्या । मामपि कृतविनयस्य पुत्रकस्य लम्भानन्तरं स्वर्गारोहणेनावसितकार्यां विप्रयोगमुखीं महाराजः समर्थयिष्यति ।

---

सुखविरोधिता । 'प्रतिरोधिपरास्कन्दिप्रत्यर्थिपरिपन्थिनः' इति त्रिकाण्डी ॥ **आश्वासितस्येति** । सुतोपलब्ध्या पुत्रप्राप्त्या । नामेति प्रकाशे । 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इति त्रिकाण्डी । आश्वासितस्य कृतसमाधानस्य । विप्रयोगो वियोगः । व्यावर्तिता दूरीकृता आतपरुगुष्णपीडा यस्य । 'आतपो रश्मिमात्रे स्यात्सूर्यरश्मौ च दृश्यते' इति धरणिः । 'आतपभिया' इति तु युक्तः पाठः । प्रथमाभ्रवृष्ट्या नूतनमेघवर्षेण 'अभ्रं मेघो वारिवाहः' इत्यमरः । वैद्युतो विद्युत्संबन्धी ॥ १६ ॥ **विदूषकः** । अयं सोऽर्थोऽनर्थानुबन्धीति तर्कयामि तत्रभवता वल्कलं गृहीत्वा तपोवनं गन्तव्यमिति । 'अत्रभवान्देवराजः स्वयमनुग्राहयितव्यः' इत्यपि क्वचित्पाठः ॥ **उर्वशी** । हा हतास्मि मन्दभाग्या । मामपि कृतविनयस्य पुत्रकस्य लम्भानन्तरं स्वर्गारोहणेनावसितकार्यां विप्रयोगमुखीं महाराजः । समर्थयिष्यति ॥ **नहीति** । सुलभः सुप्रापो वियोगो यस्याः सा । तादृशी

अहमपि तव सूनावद्य विन्यस्य राज्यं
विचरितमृगयूथान्याश्रयिष्ये वनानि ॥ १७ ॥

**कुमारः**—नार्हति तातो नृपपुंगवधारितायां दम्यं नियोजयितुम् ।

**राजा**—अयि वत्स, मा मैवम् ।

शमयति गजानन्यान्गन्धद्विपः कलभोऽपि स-
न्प्रभवतितरां वेगोदग्रं भुजङ्गशिशोर्विषम् ।
भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं
न खलु वयसा जात्यैवायं स्वकार्यसहो गणः ॥ १८ ॥

आर्य लातव्य ।

**कञ्चुकी**—आज्ञापयतु देवः ।

**राजा**—मद्वचनादमात्यपर्वतं ब्रूहि, संभ्रियतामायुष्मतो राज्याभिषेकः ।

(कञ्चुकी दुःखेन निष्क्रान्तः । सर्वे दृष्टिविघातं रूपयन्ति ।)

---

परवत्ता पराधीनता । 'परतन्त्रः पराधीनः परवान्' इत्यमरः । शासनं आज्ञारूपम् । सूनौ पुत्रे । 'सूनुः पुत्रेऽनुजे रवौ' इत्यनेकार्थः । विचरितानि कृतगमनानि मृगयूथानि मृगसमूहा येषु ॥ १७ ॥ नृपपुंगवो नृपश्रेष्ठः 'महोक्षधारितायाम्' इत्यपि पाठः । 'दम्यवत्सतरौ समौ' इति त्रिकाण्डी ॥ **शमयतीति** । गन्धद्विपो गन्धगजः कलभो बालोऽपि सन्नन्यान्गजाञ्शमयति परिभवति । गन्धगजलक्षणं च—'यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । स वै गन्धगजो नाम नृपतेर्विजयावहः ॥' इति । वेगैः 'धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः' इति वचनोक्तैर्विषवेगैरुदग्रं क्रूरम् । भुजङ्गशिशोर्विषं गरलं प्रभवति मारणसमर्थं भवति । धातवश्च सप्त । उक्तं च वाग्भटादौ—'रसासृङ्मांसमेदोस्थिमज्जशुक्राणि धातवः' इति । एवं च सप्तैव विषवेगा अपि भवन्ति । तल्लक्षणानि च विषतन्त्रे पृथक्पृथङ्निरूपितानि । यथा—'वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ । यो वेगः पञ्चमोऽसौ नयनविवशतां कण्ठभङ्गं च हिक्कां षष्ठो निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥' इति । एवं बालावस्थोऽप्यधिपती राजा भुवं परिरक्षितुमलं समर्थः खलु । यतोऽयं गन्धगजादेर्गणः समुदायो वयसा तारुण्यादिना स्वकार्यसहो निजकार्यैकरणसमर्थो

**राजा**—(आकाशमवलोक्य ।) कुतो नु खलु भो विद्युत्संपातः । (निपुणमवलोक्य ।) अये, भगवान्नारदः ।

गोरोचनानिकषपिङ्गजटाकलापः
संलक्ष्यते शशिकलामलवीतसूत्रः ।
मुक्तागुणातिशयसंभृतमण्डनश्री-
र्हैमप्ररोह इव जङ्गमकल्पवृक्षः ॥ १९ ॥

अर्घोऽर्घस्तावत् ।

**उर्वशी**—अअं भअवदो अग्घो ।

(ततः प्रविशति नारदः ।)

**नारदः**—विजयतां विजयतां मध्यमलोकपालः ।

**राजा**—भगवन्, अभिवादये ।

**उर्वशी**—भेअवं, पणमामि ।

**नारदः**—अविरहितौ दम्पती भूयास्ताम् ।

**राजा**—(आत्मगतम् ।) अपि नामैवं स्यात् । (प्रकाशम् । कुमारमाश्लिष्य ।) वत्स, भगवन्तमभिवादयस्व ।

**कुमारः**—भगवन्, और्वशेय आयुः प्रणमति ।

**नारदः**—आयुष्मानेधि ।

---

१. अयं भगवतोऽर्घः ।

२. भगवन्, प्रणमामि ।

---

न, किंतु जात्यैव स्वकार्यनिर्वहणसमर्थ इत्यर्थः ॥ १८ ॥ संभ्रियतां क्रियताम् ॥ **गोरोचनेति** । गोरोचनाया निकषाः कषपाषाणाः, लक्षणया तत्स्था रेखाः, तद्वत्पिङ्गो जटाकलापो जटासमूहो यस्य । शशिकलावदमलं शुभ्रं वीतसूत्रमुपवीतं यस्य मुक्तागुणैर्मौक्तिकसरैरतिशयेनात्यन्तं संभृता कृता मण्डनश्रीर्भूषणशोभा यस्य । तथा हैमा हेमसंबन्धिनः । सौवर्णा इत्यर्थः । प्ररोहा निजजटा यस्यैतादृशो जङ्गमकल्पवृक्ष इव संलक्ष्यते ॥ १९ ॥ **उर्वशी** । अयं भगवतोऽर्घः । 'मूल्ये पूजाविधावर्घः' इति त्रिकाण्डी । मध्यमलोको मर्त्यलोकः । 'पुंसि स्मृतौ मध्यमलोकमर्त्यौ' इति त्रिकाण्डीशेषः । **उर्वशी** । भगवन्, प्रणमामि ॥ आयुष्मानेधि दीर्घायुर्भव ॥

**राजा**—अयं विष्टरोऽनुगृह्यताम् ।

(नारदस्तथोपविष्टः । सर्वे नारदमनूपविशन्ति ।)

**राजा**—(सविनयम् ।) भगवान्, किमागमनप्रयोजनम् ।

**नारदः**—राजन्, श्रूयतां महेन्द्रसंदेशः ।

**राजा**—अवहितोऽस्मि ।

**नारदः**—प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति ।

**राजा**—किमाज्ञापयति ।

**नारदः**—त्रिकालदर्शिभिरादिष्टः सुरासुरविमर्दो भावी । भवांश्च सांयुगीनः सहायः । तेन न त्वया शस्त्रन्यासः कर्तव्यः । इयं चोर्वशी यावदायुस्तव सहधर्मचारिणी भवत्विति ।

**उर्वशी**—(अपवार्य ।) सल्लं विअ हिअआदो अवणीदम् ।

**राजा**—परमनुगृहीतोऽस्मि परमेश्वरेण ।

**नारदः**—युक्तम् ।

त्वत्कार्यं वासवः कुर्यात्त्वं च तस्येष्टकार्यकृत् ।
सूर्यः संवर्धयत्यग्निमग्निः सूर्यं स्वतेजसा ॥ २० ॥

(आकाशमवलोक्य ।) रम्भे, उपनीयतां मन्त्रेण संभृतः कुमारस्याभिषेकः ।

---

१. शल्यमिव हृदयादपनीतम् ।

---

विष्टर आसनम् । 'विष्टरः कुशमुष्टौ स्यादासनेऽपि महीरुहे' इति मुक्तावली ॥ प्रभावेण पश्यति तच्छीलः ॥ त्रिकालदर्शिभिस्त्रिकालविद्भिर्भावी भविष्यत्सुरासुरविमर्दो देवदानवसङ्ग्राम आदिष्टः कथितः । संयुगे युद्धे साधुः सांयुगीनः । 'सांयुगीनो रणे साधुः' इति त्रिकाण्डी । शस्त्रन्यासः शस्त्रत्यागः । यावदायुर्यावज्जीवम् ॥ **उर्वशी** । शल्यमिव हृदयादपनीतम् ॥ **त्वत्कार्यमिति** । वासव इन्द्रः । इष्टानि कार्याणि करोति तादृशः । अग्नितेजो हि दिने सूर्यमनुप्रविशति रात्रौ सूर्यतेजोऽग्निमिति पौराणी प्रसिद्धिः ॥ २० ॥ **रम्भा** । अयम-

**रम्भा**—अअं से अहिसेअसंभारो[1] ।

**नारदः**—उपवेश्यतामयमायुष्मान्भद्रपीठे ।

(रम्भा कुमारं भद्रपीठ उपवेशयति ।)

**नारदः**—(कुमारस्य शिरसि कलशमावर्ज्य ।) रम्भे, निर्वर्त्यतामस्य शेषो विधिः ।

**रम्भा**—(यथोक्तं निर्वर्त्य ।) वेच्छ, पणम भअवन्दं पिदरो अ[2] ।

(कुमारः सर्वान्प्रणमति ।)

**नारदः**—स्वस्ति भवते ।

**राजा**—कुलधुरंधरो भव ।

**उर्वशी**—पिदुणो आराहओ होहि[3] ।

(नेपथ्ये वैतालिकद्वयम् ।)

**प्रथमः**—विजयतां युवराजः ।

अमरमुनिरिवात्रिः स्रष्टुरत्रेरिवेन्दु-
बुंध इव शिशिरांशोर्बोधनस्येव देवः ।
भव पितुरनुरूपस्त्वं गुणैर्लोककान्तै-
रतिशयिनि समस्ता वंश एवाशिषस्ते ॥ २१ ॥

---

1. अयमस्याभिषेकसंभारः ।
2. वत्स, प्रणम भगवन्तं पितरौ च ।
3. पितुराराधको भव ।

---

स्याभिषेकसंभारः । संभारो बिल्ववल्मीकमृत्तिकादिसामग्री ॥ भद्रपीठं हेमादिमयमासनम् । भद्रासनलक्षणं चोक्तं देवीपुराणे—'हैमं च राजतं ताम्रं क्षीरवृक्षमयं च वा । भद्रासनं प्रकर्तव्यं सार्धहस्तसमुच्छ्रितम् ॥ सपादहस्तमानं च राज्ञो माण्डलिकान्तरात् ॥' वराहसंहितायां च—'त्रिविधस्तस्योच्छ्रायो हस्तः पादाधिकोऽर्धयुक्तश्च । माण्डलिकानन्तरजित्समस्तराज्यार्थिनां शुभदः ॥'इति ॥ **रम्भा** । वत्स, प्रणम भगवन्तं पितरौ च ॥ **उर्वशी** । पितुराराधको भव । 'पितुरस्य वचनानि भवन्तु' इत्यपि क्वचित्पाठः । यद्यत्पित्रैतच्छुभमुच्यते तत्तदस्य भवत्वित्यर्थः ॥ **नेपथ्ये** । प्रथमो वैतालिकः । **अमरमुनिरिति** । बोधनो बुधः । 'ऐन्दवस्य' इति पाठेऽप्यर्थः स एव । देवो राजा । पुरूरवा इत्यर्थः । 'राजा भट्टारको देवः'

**द्वितीयः**—

तव पितरि पुरस्तादुन्नतानां स्थितेऽस्मि-
न्स्थितिमति च विभक्ता त्वय्यनाकम्प्यधैर्ये ।
अधिकतरमिदानीं राजते राजलक्ष्मी-
र्हिमवति जलधौ च व्यस्ततोयेव गङ्गा ॥ २२ ॥

**रम्भा**—दिट्ठिआ[1] पिअसही पुत्तअस्स जुवराअसिरीं पेक्खिअ भत्तुणो अविरहेण वड्ढदि ।

**उर्वशी**—[2]णं साधारणो ज्जेव एसो अब्भुदओ । (कुमारं हस्ते गृहीत्वा ।) जाद, जेट्ठमादरं वन्देहि ।

**राजा**—तिष्ठ । सममेव तत्रभवत्याः समीपं यास्यामस्तावत् ।

**नारदः**—

आयुषो यौवराज्यश्रीः स्मारयत्यात्मजस्य ते ।
अभियुक्तं महासेनं सैनापत्ये मरुत्वता ॥ २३ ॥

**राजा**—अनुगृहीतोऽस्मि मघवता ।

**नारदः**—भो राजन्, किं ते भूयः प्रियं करोतु पाकशासनः ।

१. दिष्ट्या प्रियसखी पुत्रकस्य युवराजश्रियं प्रेक्ष्य भर्तुरविरहेण वर्धते ।

२. ननु साधारण एवैषोऽभ्युदयः । जात, ज्येष्ठमातरं वन्दस्व ।

---

इत्यमरः । अनुरूपो योग्यः । अतिशयिनि सर्वोत्कर्षशालिनि ते वंशे कुले एव समस्ता आशिषः । सन्तीति शेषः।स्वष्ट्रादिपुरूरवःपर्यन्तेष्वखिलपूर्वपूर्वगुणसमूहो यथाभूत्तथा त्वय्यपि भूयादिति भावः ॥ २१ ॥ **द्वितीयः । तव पितरीति ।** उन्नतानां महताम् । स्थितिमति मर्यादायुक्ते । अनाकम्प्यधैर्येऽनुच्छेद्यचेतःस्थैर्यशालिनि । राजते शोभते ॥ २२ ॥ **रम्भा ।** दिष्ट्या हर्षे । प्रियसखी पुत्रकस्य युवराजश्रियं प्रेक्ष्य भर्तुरविरहेण वर्धते । **उर्वशी ।** ननु साधारण एवैषोऽभ्युदयः । कुमार, ज्येष्ठमातरं वन्दस्व ॥ **आयुषो यौवराज्येति ।** स्मारयति स्मृतिगोचरीकरोति । महासेनं कार्तिकेयम् । 'कार्तिकेयो महासेनः' इति त्रिकाण्डी । सेनापतेर्भावः सैनापत्यम् । मरुत्वता इन्द्रेण । 'इन्द्रो मरुत्वान्' इत्यमरः ॥ २३ ॥ पाकशासन

**राजा**—अतःपरमपि प्रियमस्ति । यदि भगवान्पाकशासनः प्रसादं करोतु । ततः

(भरतवाक्यम् )

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् ।
संगतं श्रीसरस्वत्योर्भूयादुद्भूतये सताम् ॥ २४ ॥

अपि च ।

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ॥ २५ ॥

(इति निष्क्रान्ताः सर्वे ।)

## पञ्चमोऽङ्कः ।

समाप्तमिदं श्रीकालिदासकृतं विक्रमोर्वशीयं नाम त्रोटकम् ।

---

इन्द्रः ॥ **परस्परेति** । संश्रय आश्रयः । संगतं मिलनम् । उद्भूतये उत्कृष्टभूत्यै ॥ २४ ॥ **सर्व इति** । दुर्गाणि दुःखानि । भद्राणि कल्याणानि । 'स्वश्रेयसं शिवं भद्रं कल्याणम्' इत्यमरः । कामानभिलाषान् । 'कामोऽभिलाषः' इत्यमरः । सर्वत्र सर्वस्मिन्स्थले सर्वस्मिन्काले च नन्दत्वानन्दं प्राप्नोतु ॥ २५ ॥

श्रीश्रिम्बेकरवंशभूषणमणिः श्रीतानभट्टात्मजः
श्रीमद्दीक्षितरङ्गनाथविबुधो धीरो धराविश्रुतः ।
श्रीनारायणबालकृष्णकृतिनौ जज्ञे तनूजौ स्फुर-
द्विद्वद्वादिकरीन्द्रकुम्भसरणीसंचारिपञ्चाननौ ॥
सर्वतन्त्रस्वतन्त्रश्रीबालकृष्णतनूद्भवौ ।
श्रीवेणीमाधवबुधरङ्गनाथाभिधौ सुतौ ॥
व्योमकेशपुटभेदनवासी जानकीशपदपद्ममिलिन्दः ।
रङ्गनाथ इममाशु वितेने प्रीतये रघुवरस्य निबन्धम् ॥
कृतेयं विक्रमोर्वश्या रङ्गनाथमनीषिणा ।
प्रकाशिका काशिकादि पत्तनेषु प्रकाशताम् ॥
प्रेक्षाविशेषमथनेन वितर्कदाम्ना
भूम्ना परोपकृतये विबुधेश्वराणाम् ।
साहित्यसागरत एष समाचकर्ष
ग्रन्थं सुधाधिककथं किल रङ्गनाथः ॥

पौरोभाग्यनिवेशिताशयवतामापाततः पश्यता-
मामूलं कलुषैकसंग्रहकृतामात्मस्तुतिं कुर्वताम् ।
किं नः कार्यमनार्यसंगतिमतामास्तामिह श्रीमता-
मानन्दोत्कलिकाविकासितहृदां प्रेमैकदृष्टिः सताम् ॥

नयनधरणिभूभृद्भूमिते(१७१२)ऽब्दे नभस्ये-
ऽसितदल इह नागानां तिथावर्कवारे ।
सुरभिषगधिदैवत्येऽपि भे वृद्धियोगे-
ऽकृत कृतमतिरेनं रङ्गनाथः प्रपूर्णम् ॥

इत्थं सत्पदबन्धुरा गुणधुरा धाराधरालंकृतेः
सारा संसृतिसागरान्तरमिता मोदोल्लसन्नागरा ।
द्योतत्कान्तिभराचिराद्विरचिता श्रीरङ्गनाथाह्वये-
नेयं भाववतां भवत्त्वविरतं वामोदिनी भामिनी ॥

यदालिखापयदिदं रङ्गनाथस्तदा किल ।
ऋषीन्दुद्विधराधीराः समवेता बभूविरे ॥

श्रिम्बेकरोपनामश्रीरङ्गनाथतनूजनेः ।
श्रीबालकृष्णविदुषो जगत्त्रानातु पुस्तकम् ॥

**इति श्रीमद्यायजूकप्रवरश्रिम्बेकरमौनिवंशोत्तंसरङ्गनाथदीक्षितकुक्षिजबिन्दुवृन्दपुरंदरश्रीबालकृष्णभट्टाङ्गोद्भतरङ्गनाथविरचितायां विक्रमोर्वशीप्रकाशिकायां पञ्चमाङ्कोन्मेषः ॥**

# श्लोकसूची ।

